आधुनिकसङ्केतितेतु आधुनिकमात्रसङ्केतितेनदीवृद्ध्यादिपदेतुसम्प्रदायमते स्वरसं हृदि निधाय नवीनमतन्दर्शयति नव्यास्त्विति
नशक्तिरिति। तेषामत्याधुनिकसङ्केतितानां घटादिपदाच्छाब्दबोधानस्यादितिभावः मतद्वयेप्यपभ्रंशात्मकगागर्यादिपदे शक्तिभ्रमा।
देवबोधइत्यवधेयम् व्याकरणादिति भूसत्तायाम् वर्त्तमानेलडित्यादिव्याकरणादित्यर्थः लाघवादिति कृतित्वजातेः शक्यतावच्छे।
दकत्वेलाघवादित्यर्थः नचकर्त्तुरनभिधानादिति अनभिहितइत्यधिकारीयेण कर्तृकरणयोस्तृतीयेत्यनेनाभिहितकर्त्तरितृतीयावि

आधुनिकसङ्केतितेतु न शक्तिरिति सम्प्रदायः नव्यास्तु ईश्वरेच्छा न शक्तिः किन्त्विच्छैव तेनाधुनिकसङ्केतिते।
पि शक्तिरस्तीत्याहुः शक्तिग्रहस्तु व्याकरणादितः तथाहि शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च
वाक्यस्य शेषाद्विवृत्तेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद्भवति
क्वचित्सति बाधके त्यज्यते वैयाकरणैराख्यातस्य कर्त्तरि शक्तिरुच्यते चैत्रः पचतीत्यादौ कर्त्रा सह चैत्र।
स्याभेदान्वयस्तत्र गौरवात्त्यज्यते किन्तु कृतौ शक्तिर्लाघवात् कृतिश्चैत्रादौ प्रकारीभूय भासते नच कर्त्तुरन
भिधानाच्चैत्रपदोत्तरं तृतीया स्यादिति वाच्यम् कर्तृसङ्ख्यानभिधानस्य तत्र तन्त्रत्वात्। सङ्ख्याभिधा।
नयोगश्च कर्मत्वाद्यनवरुद्धः प्रथमान्तपदोपस्थाप्यः॥

धानादितिभावः तत्र तृतीयायाम् तन्त्रत्वात् प्रयोजक।
त्वात् ननु कर्तृसङ्ख्याभिधान एव किम्प्रयोजकइत्याशङ्क्य तत्प्रयोजकन्दर्शयति सङ्ख्याभिधानेति चैत्रः पचति तण्डुलमि।
त्यादौ कर्मत्वादिलाक्षणिकप्रथमान्तपदोपस्थाप्यतण्डुलादिव्युदासाय कर्मत्वाद्यनवरुद्ध इति ननु चैत्र इव मैत्रो गच्छतीत्यत्रा
ख्यातेनैकवचनत्वरूपेणोक्तायाः सङ्ख्यायाश्चैत्रेऽन्वयः स्यात्कर्मत्वाद्यनवरुद्धत्वात् प्रथमान्तपदोपस्थाप्यत्वाच्च किञ्च।
पक्वमन्नं भुज्यत इत्यादावन्नादौ सङ्ख्यान्वयानुपपत्तिः पाककर्मत्वस्यान्नेऽन्वयेऽनकर्मत्वाद्यनवरुद्धत्वाभावादत आह॥१॥

ताभ घटत्वादेरवच्छेदकत्वे मानन्तया कम्बुग्रीवादिमान्नास्तीति प्रतीत्या कम्बुग्रीवादिमत्त्वेनिरूक्तावच्छेदकत्वानवगाहनात्कथन्तस्य तादृशावच्छेदकत्वन्तत्प्रतीतिगोचरइति घटो नास्तीति वदियमपि स्वरूपसम्बन्धरूपमेवावच्छेदकत्वंकम्बुग्रीवादिमत्त्वेऽवगाहत इतितद्दूलाद्गुरुरपि भवत्यवच्छेदः प्रतियोगितापाद इति ग्रन्थकृतात्पर्यन्तेन न च गुरुधर्मस्वरूपसंबंधरूपावच्छेदकत्वस्यबाधादुक्तप्रतीतौस्तावच्छिन्नव्यापकतावच्छेदकावच्छिन्नप्रतियोगिता संबंधेनैव प्रतियोगिनोऽभावे अन्वयोऽभ्युपेयतो घटो नास्तीत्यादौ तुलाघवाद्घटत्वाद्यवच्छिन्नप्रतियोगितासंबंधेनैव घटादेरन्वयोऽभ्युपगन्तु।

ऽ. घनगर्जितेन मेघानुमितिस्थलेऽव्याप्त्यापत्त्या सिषाधयिषामात्रस्य पक्षतात्वन्निषेधयति सिषाधयिषा मात्रन्न पक्षतेति मेघानुमानात् मेघानुमिते अत एव वक्ष्यमाणदूषणादेव सिषाधयिषाविरहरूपविशेषणस्य प्रयोजनमाह सिद्धौसत्यामिति अत इति अत्रानुमितिनिर्वाहकपक्षता सिद्ध्यर्थमितिभावः तत्र सिषाधयिषायां सत्यामसत्यामपीति सत्यासुभयाभावप्रयुक्तस्यासत्यांविशेष्याभावमात्रप्रयुक्तस्योक्तविशिष्टाभावस्य सत्त्वादितिभावः सिद्धौ सत्यामसत्यां चेति सत्यांविशेषणाभावमात्रप्रयुक्तस्यासत्यान्तूभयाभावप्रयुक्त

मु०। सिषाधयिषामात्रन्न पक्षता विनापि सिषाधयिषां घनगर्जितेन मेघानुमानात् अत एव साध्यसन्देहोपि न पक्षता विनापि सन्देहन्तदनुमानात् सिद्धौ सत्यामपि सिषाधयिषासत्त्वेऽनुमितिर्भवत्येव अतः सिषाधयिषाविरहविशिष्टत्वं सिद्धौ विशेषणं तथा च यत्र सिद्धिर्नास्ति तत्र सिषाधयिषायां सत्यामसत्यामपि पक्षता यत्र सिषाधयिषास्ति तत्र सिद्धौ सत्यामसत्यापि पक्षता यत्र सिद्धिरस्ति सिषाधयिषा च नास्ति तत्र न पक्षता सिषाधयिषाविरहविशिष्टस्याविशिष्टाभावस्य सत्त्वादितिभावः सिद्धेः सत्त्वादिति सिद्धेः सत्त्वेन तदभावरूपपक्षताया अभावादिति ११ इष्टसिद्धेः सत्त्वात्॥ ६ ॥
भावः सिषाधयिषाविरहवैशिष्ट्यञ्च सिद्धावेककालावच्छेदेनैकात्मवृत्तित्वम् तेन सिषाधयिषाकालीनसिद्धेः कालिकसम्बन्धेन सिषाधयिषाविरहविशिष्टसत्त्वेपि न क्षतिः॥ ११ मुचितमितिवाच्यम् समानाकारकप्रतीत्या एकत्र प्रतियोग्यंशे प्रकारभूतधर्मावच्छिन्नप्रतियोगितासंसर्गावगाहित्वमपरत्र तादृशधर्मावच्छिन्नव्यापकतावच्छेदकधर्मावच्छिन्नप्रतियोगितासंसर्गावगाहि त्वमिति कल्पनस्यानुचितत्वेन लाघवादुभयत्रैव प्रतियोगिविशेषणीभूतधर्मावच्छिन्नप्रतियोगितासंसर्गावगाहिताकल्पनस्यैवउचितत्वेन गुरुधर्मस्यनावच्छेदकत्वमित्यत्रैव प्रमाणदौर्लभ्यं प्रतीत्यनुरोधेनैवभ्रवच्छेदकतासिद्धेरुपगन्तव्यत्वादितिध्येयम् ननु प्रतियोगिताधर्मिकोभयाभावघटितलक्षणे गुरुधर्मा

का॰मु॰ रा॰०वच्छिन्नसाध्यकव्याप्त्यंशे केवलसम्भवति।गुरुधर्मस्य साध्यतावच्छेदकताया असम्भवादिति कथमेतदिति चेन्न स्वरूपसंबंधरूपावच्छे
दि॰रा॰ दकताया एव गुरुधर्मे प्राचीनैरंगीकारात् साध्यतावच्छेदकताविषयताविशेषरूपत्वेन गुरुधर्मस्यापि तत्सम्भवादिति हृदयम् पक्षवृत्तित्वमि
१४७ त्यत्रेतीति मूले किमुत्तरं इतिपूरणीयम् तथाच पक्षवृत्तित्वघटकम्पक्षत्वं यज्जिज्ञासाविषय इति हेतुस्तत्पक्षत्वमाहेत्यर्थः नन्वेतावता कासङ्ग॰
तिः प्रदर्शितेत्याशङ्कायामाह तथाचेति ननु परामर्शनिरूपणानन्तरम्पक्षतानिरूपणे भवतूपोद्घातसङ्गतिः व्याप्तिनिरूपणाव्यवहितो
त्तरम्पक्षतानिरूपणे कासङ्गतिरित्यत आह व्याप्तिनिरूपितेत्यादि एककार्यकारित्वं एककार्यप्रयोजकत्वं प्रयोजकत्वञ्च कारणकारण।

दि॰ परामर्शरूपकारणसत्त्वे सिद्धिरूपविरोधिसत्त्वेयद्यनुमित्सा स्यात्तदा तस्या उत्तेजकत्वम्वाच्यन्न चैतत्सम्भवतीत्याशङ्कते ननु
यत्रेति परापर्शानन्तरम्परापर्शद्वितीयक्षणे ततः सिद्ध्युत्पत्तिर्द्वितीयक्षणे क्रमेण अव्यवधानेन एवमन्यत्रापीति यत्रपरामर्श

मु॰। ननु यत्र परामर्शानन्तरं सिद्धिः ततः सिषाधयिषा तत्र सिषाधयिषाकाले परामर्शनाशान्नानुमितिः यत्र सि
द्धिपरामर्शसिषाधयिषाः क्रमेण भवन्ति तत्र सिषाधयिषाकाले सिद्धेर्नाशात्प्रतिबन्धकाभावादेवानुमितिः यत्र
सिषाधयिषासिद्धिपरामर्शास्तत्र परामर्शकाले सिषाधयिषैव नास्ति एवमन्यत्रापि सिद्धिकाले परामर्शकाले च
न सिषाधयिषा योग्यविभुविशेषगुणानां यौगपद्यनिषेधात्॥ ९९ सिषाधयिषासिद्धयः क्रमेण भवन्ति एवं सिद्धिसिषाध
यिषापरामर्शाः एवं सिषाधयिषापरामर्शसिद्धयस्तत्रेत्यर्थः सिद्धिकाले परामर्शकाले चेति सिद्धिपरामर्शोभयक्षण इत्यर्थः॥९॥

तावच्छेदकसाधारणम् तेनानुमितौ पक्षतायाः कारणत्वेपि व्याप्तेर्विषय विधया कारणतावच्छेदकत्वेपि च न क्षतिः अत एव सद्धेतुनिरू
पणानन्तरं हेत्वाभासनिरूपणेप्येककार्यकारित्वसङ्गतिप्रदर्शनं दीधितिकृतां सङ्गच्छते स्वोक्तसद्धेतोः परामर्शेनानुमितेर्जननात् परोक्तम
निर्हेतोर्दुष्टत्वेन ज्ञानस्य प्रतिबन्धकनिरासद्वाराऽनुमितावुपयोगाच्च वस्तुतस्तूपोद्घातोपि व्याप्तिनिरूपितासङ्गतिर्भवत्येव तदभिधानानन्त
राभिधानाप्रयोजकजिज्ञासाजनकज्ञानविषयत्वस्यैव तन्निरूपितत्वसङ्गतित्वात् व्याप्तिनिरूपणानन्तरमप्येकपरामर्शविषयत्वेन प राम
क्षवृत्तित्वस्मरणे वृत्तित्वघटकं किं पक्षत्वमिति जिज्ञासोत्पादसम्भवात् अत एव पक्षतानिरूपणानन्तरम्परामर्शस्य कारणताव्यवस्थाप १४७
नेदीधितिकृतानुमितिलक्षणोपोद्घातस्य पक्षतानानि॥

टी॰ रूपितसङ्गतित्वमुपपादितं गदाधरभट्टाचार्यैरिति ध्येयम् स्पष्टतयेति सिषाधयिषाविरहविशिष्टसिद्ध्यभावो यत्र स पक्ष इत्युक्त्याप्य
र्थात्तादृशाभावः पक्षतेति लाभसम्भवात्स्पष्टतयेत्युक्तम्। अव्याप्त्यापत्त्येति पक्षे पक्षताभावापत्त्येत्यर्थः न च सिषाधयिषाविरहविशि
ष्टसिद्धेः समवायेन पुरुषे सत्त्वे पि पक्षे न तदभावसत्त्वात्पक्षतापत्तिरिति वाच्यम् विशेष्यतासम्बन्धेन वर्त्तत इति तद्ध्येयात् अत इतीति
चतुर्थ्यन्तात्तसिरिति भावः एककालेति एकक्षणेत्यर्थः तेन न स्थूलकालमादायातिप्रसङ्गः विरोधिसत्त्वे प्रतिबन्धकसत्त्वे

दि॰ कथमिति किमर्थमित्यर्थः इति प्रत्यक्षमिति अनुमितीष्टसाधनताविषयकमिति शेषः प्रत्यक्षोत्पत्तेः पूर्वमनुमितीष्ट।
साधनताधीस्वीकारे इच्छासामग्र्याप्रतिबन्धात्प्रत्यक्षमेव न स्यात् यादृशयादृशेति घटानुमितिर्जायतामितीच्छासत्त्वे पि

सु॰ तत्कथं सिषाधयिषाविरहविशिष्टत्वं सिद्धेर्विशेषणमिति चेन्न यत्र वह्निव्याप्यधूमवान्पर्वतो वह्नि
मानिति प्रत्यक्षं स्मरणं वा ततः सिषाधयिषा तत्र पक्षतासम्पत्तये तद्विशेषणस्यावश्यकत्वात् इदन्तु बो।
ध्यम् यादृशयादृशसिषाधयिषासत्त्वे सिद्धिसत्त्वे यल्लिङ्गकानुमितिस्तादृशतादृशसिषाधयिषाविरहवि
शिष्टसिद्ध्यभावस्तल्लिङ्गकानुमितौ पक्षता॥ १ पर्वतो वह्निमानिति सिद्धिसत्त्वे वह्निमानित्यनुमित्युत्पत्तेः पर्व
तो वह्निमानिति सिद्धिसत्त्वे पि तदिच्छाबलात्तादृशानुमित्यापत्तिरत उक्तम् सिद्धिसत्त्व इति इदञ्चोत्तेजकेच्छादिव्यक्तेः प
रिचायकं रूपम् उत्तेजकत्वन्तु तत्तद्व्यक्तित्वेनैवेति बोध्यम्॥ १ अनुमित्सा स्यात् अनुमित्सा वर्त्ततेत्यर्थः तदेति अन्यथा परामर्शा
भावे नुमितेरेवानुत्पत्त्या सिषाधयिषाया उत्तेजकत्वकल्पने बीजाभावात्प्रतिबन्धकसत्त्वे कार्योत्पादार्थमेवोत्तेजकस्य कल्पनीयत्वात् सिद्ध्य
सत्त्वे प्रतिबन्धकाभावादेव कार्योत्पादसम्भवे नोत्तेजकस्यैवानपेक्षितत्वात् सिषाधयिषाभावे धर्मिणः सत्त्वे न कस्योत्तेजकत्वं कल्पनीयमिति
भावः सिद्धिमात्रकाले परामर्शमात्रकाले च सिषाधयिषायास्सम्भवात् सिद्धिकाल इत्यादिमूलमसङ्गतमतो व्याचष्टे सिद्धौति ननु वह्निमानिति प्र
त्यक्षानन्तरं सिषाधयिषैव न सम्भवति इष्टसाधनताज्ञानस्य हेतुत्वादिष्टसाधनताज्ञानस्य तादृशप्रत्यक्षात्पूर्वमेवोपगमे प्रत्यक्षमेव न सम्भ
वति बलवदिच्छासामग्र्याप्रतिबन्धात् प्रत्यक्षानन्तरन्तदुपगमे सिषाधयिषाक्षणे प्रत्यक्षमेव न तिष्ठतीत्याशङ्क्य॥

ज्ञानाभावेप्युत्पन्न॥ त्रु·पं·४॥

इच्छासत्त्वेपीत्यादि समुच्चयार्थकम् पूर्वोक्तरीत्या पूर्वपक्षिणाप्युक्तरूपमिति यद्यपीच्छासत्त्वे सिद्धिसत्त्वे अनुमितिरित्यनन्तरतत्तद्व्यक्तित्वेन विशेषेच्छा

का·सु· रा· निरासाय शेषम्पूरयति अनुमितीत्यादि प्रतिवाचकरूपमिति यद्यपीच्छासत्त्वे सिद्धिसत्त्वे अनुमितिरित्यनन्तरतत्तद्व्यक्तित्वेन विशेषेच्छा

दि·रा· व्यक्तीनां ज्ञानसम्पादनमित्यर्थः तत्तद्व्यक्तित्वेनैवेच्छैव कारणानुमितिमित्यनन्तभावस्योत्तेजकतावच्छेदककोटिकाप्रवेशोव्यवृद्धिश्चयते नतु

१४८ किञ्चिद्ज्ञानं जायतामितीच्छैवनसम्भवति सिद्धेर्वस्तुनिरिच्छानुत्पत्तेर्यत्किञ्चिद्ज्ञानस्य सिद्धत्वात् नचसिद्धेपि सिद्धत्वेनाज्ञानदशा।

यामिच्छादर्शनान्नानुपपत्तिरितिवाच्यम् सिद्धत्व ज्ञानादिव्यक्ताविच्छानुत्पत्त्याज्ञानादिव्यतिरिक्तस्थल एवसिद्धत्वज्ञानमप्रतिबन्धकं।

दि· तेन तत्तदिच्छायाउत्तेजकत्वेन यत्किञ्चिज्ज्ञानमित्यस्यैतदुत्तरकालीनमित्यादिः अन्यथायत्किञ्चिज्ज्ञानस्यसर्वदासि

द्धत्वेनतद्रूपेणेच्छाविरहात् नानुमितिरिति नानुमित्यापत्तिरित्यर्थः तदिच्छायास्तद्व्यक्तित्वेनोत्तेजकत्वानभ्युपगमाद्दिति।

भावः नन्वयत्किञ्चिज्ज्ञानञ्जायतामित्येतादृशेच्छाकालेसिद्धिसत्त्वेप्यनुमितिर्भवत्येवेतिवाच्यम् अनुमितिसामग्रीसत्त्वेऽ

मू· तेन सिद्धिपरामर्शसत्त्वे यत्किञ्चिज्ज्ञानञ्जायतामितीच्छायामपिनानुमितिः वह्निव्याप्यधूमवा

न्पर्वतोवह्निमानिति प्रत्यक्षसत्त्वेप्रत्यक्षातिरिक्तज्ञानञ्जायतामितीच्छायान्तुभवत्येव॥ ६ ॥

त्मादिविषयकयत्किञ्चिज्ज्ञानसादिसामग्रीसत्त्वनियमेन यत्किञ्चिमानसाद्युत्पत्त्यैवतादृशेच्छाविषयसिद्धेः तत्रानु

मित्युत्पत्ताविष्टापत्त्यसम्भवात् नन्वनुमितित्वप्रकारकेच्छात्वेनानुगतरूपेणैवोत्तेजकत्वम्वाच्यम् तावतैवयत्किंचि

ज्ज्ञानञ्जायतामितीच्छावारणसम्भवान्नतु तत्तद्व्यक्तित्वेनोत्तेजकत्वङ्कल्प्यम् गौरवादित्यतआह वह्निव्याप्येति प्र

त्यक्षातिरिक्तंज्ञानमित्यस्यशाब्दसामग्र्यसत्त्वइत्यादिः॥ ६ ज्ञानादौनुमितिमात्रविरोधीतिसिद्धान्तात् अतएवोक्तंसिद्धेरिच्छा

विरहादिति तत्रतत्रग्रन्थकृद्भिरित्यतोव्याचष्टे एतदुत्तरकालीनेति अनुमितिसामग्रीसत्त्वइति अनुमितिसामग्र्यभावेतादृशे।

च्छावलादनुमितावीष्टापत्तिरेवनसम्भवति तत्सत्त्वेपरामर्शादिमत्त्वेनात्मनोमानससामग्रीसत्त्वेनस्वोत्पत्त्यापीच्छायाविषयसि

द्धा अनुमित्युत्पादासम्भवायादृशेच्छाया अनुमितिं विनानविषय॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

ननुवह्निव्याप्यधूमवान् पर्वतोवह्निमानिति प्रत्यक्षानन्तरं वह्नेः प्रत्यक्षात्मकं ज्ञानं
रा॰ यत्सिद्धिस्तादृशेच्छाया एवोत्तेजकत्वोपगमादितिभावः ननुवह्निव्याप्यधूमवान् पर्वतोवह्निमानिति प्रत्यक्षानन्तरं वह्नेः प्रत्यक्षात्मकं ज्ञानं यत्सिद्धिस्तादृशेच्छाविषयसिद्धिसम्भवादित्याशङ्कानिरासाय घु
जायतामितीच्छाबलेनवह्नेर्नानुमितिः सम्भवति वह्निविषयकशाब्दबोधेनापि तादृशेच्छाविषयसिद्धिसम्भवादित्याशङ्कानिरासायघु रयति शाब्दसामग्र्यसत्वदूत्यादिरिति तथाच तदानींवह्नेश्शाब्दसम्भवेनानुमित्यै वेच्छायाविषयसिद्धिर्भवतीत्यभिप्रायः तदिच्छाव्य

दि॰ शाब्दसामग्रीसत्वेशाब्दबोधेनैवेच्छाविषयसिद्धिसम्भवात् भवत्येवेत्यनुमितिरित्यनेनसंबध्यते तथाचानुमि।
तित्वप्रकारकेच्छात्वेनोत्तेजकत्वेतत्रानुमितिर्नस्यादितिभावः तल्लिङ्गकत्वप्रवेशस्यफलमाह एवमित्यादिना नानु
मितिरिति इच्छायास्तत्तद्व्यक्तित्वेनोत्तेजकतया तदिच्छाव्यक्तेरनुत्तेजकत्वादितिभावः इदन्तुबोध्यम् वर्वतेवह्नि।

मु॰ एवंधूमपरामर्शसत्वेआलोकेनवह्निमनुमिनुयामितीच्छायामपिनानुमितिः सिषाधयिषा।
विरहकालेयादृशसिद्धिसत्वेनानुमिति स्तादृशीसिद्धिर्विशिष्यैवतदनुमितौप्रतिबन्धिकावक्त
व्या तेनपर्वतस्तेजस्वीपाषाणमयोवह्निमानिति ज्ञानसत्वेप्यनुमितेर्नरोधः॥ ॥

नुमितिर्जायतामित्याद्यनुगतेच्छानाम्पर्वतत्वावच्छिन्नोद्देश्यकत्वप्रकारतानिरूपितवह्निविधेयकत्वप्रकारता
शाल्यनुमितिगोचरेच्छात्वेनानुगतरूपेणैवोत्तेजकत्वम्प्रत्यक्षातिरिक्तज्ञानञ्जायतामित्याद्यनुगतेच्छानान्तुत
त्तद्व्यक्तित्वेननतुसकलेच्छानान्तत्तद्व्यक्तित्वेनगौरवादिति॥ ॥ १ त्केरितिधूमपरामर्शकालीनायाआलोकेनवह्नि
मनुमिनुयामितीच्छाव्यक्तेरित्यर्थः अनुत्तेजकत्वादिति पर्वतत्वावच्छिन्नोद्देश्यकवह्नित्वावच्छिन्नलिङ्गकानुमितिप्रतिबन्ध
कताया अनुत्तेजकत्वादित्यर्थः तादृशप्रतिबन्धकतानिरूपितावच्छेदकतावदभावाप्रतियोगित्वादितियावत्॥ ॥

का·सु· रा॰ अनुमितिगोचरेच्छात्वेनेति अनुमितित्वावच्छिन्नविधेयकेत्युक्तौ पर्वतोद्देश्यकवह्निविधेयकज्ञानं मे जायतामित्यादिभानासङ्गत्या
दि·रा· पत्तिरिति तत्परित्यागः न चैतादृशेच्छाया उत्तेजकत्वेपि सिद्धिसत्वे पर्वतोद्देश्यकवह्निविधेयकप्रत्यक्षादिसामग्रीकालेपि तादृशेच्छाबलात्ता
१५९ दृशानुमित्यापत्तिरिति वाच्यम् प्रत्यक्षोद्देश्यत्वविधेयत्वयोरप्रामाणिकत्वात् न चैवमनुमितिगोचरत्वनिवेशोपि व्यर्थः तादृशेच्छाया अनुमि
तिमात्रविषयकत्वादिति वाच्यम् पर्वतोद्देश्यकवह्निविधेयकप्रत्यक्षं जायतामिति हि प्रत्यक्षेच्छाबलादनुमित्यापत्तिवारणाय तदावश्यकत्वा
त् न चैवमपि शाब्दबोधेप्युद्देश्यत्वविधेयत्वयोरङ्गीकारात्तादृशेच्छाबलात्तादृशशाब्दसामग्रीसत्वेपि सिद्धिसत्वे अनुमित्यापत्तिरिति वाच्यम्
पर्वतो वह्निमानिति शाब्दबोधे पर्वते वह्निमत एव तादात्म्येन प्रकारतया पर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्नित्वावच्छिन्नविधेयताया
असत्वात् तादृशवह्निविधेयताकत्वप्रकारताशालि अनुमितिविषयकेच्छाविषयकेच्छात्वेनैवोत्तेजकतायाः स्वीकरणीयत्वात् अ
थैवमपि पर्वते वह्निमतस्तादात्म्येन साध्यतायां पर्वते वह्निमद्विधेयकशाब्दसामग्रीदशायां सिद्धिसत्वेपि पर्वतत्वावच्छिन्नोद्देश्यतानि
रूपितवह्निमत्त्वावच्छिन्नविधेयताशालिज्ञानं जायतामितीच्छाबलात्पर्वतोद्देश्यकवह्निविधेयकानुमित्यापत्तेरिति चेन्न शाब्दबोधे
प्युद्देश्यताविधेयतयोरुपगमेप्य तादृशेच्छानामपि वह्निविधेयकानुमितिस्थले तत्तद्व्यक्तित्वेनैवोत्तेजकतायाः स्वीकरणीयत्वाल्लघूपा
यासम्भवस्थल एव गौरवस्य स्वीकर्तुमनुचितत्वात् वस्तुतस्तु शाब्दबोधे विधेयत्वादिकमप्रामाणिकमेव अनुमितावेव तदङ्गीका
रस्यावश्यकः अन्यथा पर्वतो वह्निमानित्यनुमितेस्तात्पर्येण पर्वतमनुमिनोमीत्यादिप्रयोगापत्तेरनुमितेर्विधेयत्वादिमत्त्व एवान्य
त्र द्वितीयाया विषयित्वार्थकत्वेप्यनुमित्यर्थकधातुसमभिव्याहारे विधेयत्वस्य द्वितीयार्थतामुद्देश्यत्वस्य सप्तम्यर्थतामुपगम्य तादृश
प्रयोगवारणसम्भवात् न च प्रकारित्वमेव तत्र द्वितीयार्थोऽस्तु तावतापि पर्वतमनुमिनोमीति प्रयोगवारणसम्भवादिति वाच्यम्।
तथापि पर्वतत्वमनुमिनोमीत्यादिप्रतीत्यापत्तेः अत एवोक्तं गदाधरभट्टाचार्यैरनुमित्यर्थकधातुयोगे विधेयत्वं वा द्वितीयार्थ इति शा
ब्दार्थकधातुयोगे तु विषयित्वस्य द्वितीयार्थत्वेपि न क्षतिः यदि तु पर्वतं शृणोमीति प्रयोगापत्तिः पर्वतविशेष्यकशाब्दस्यापि पर्वतविशे राम
ष्यकत्वादिति विभाव्यते तदा द्वितीयान्तपदसमभिव्याहारस्थले तादात्म्यातिरिक्तसम्बन्धावच्छिन्नप्रकारितैव द्वितीयार्थोस्तु अतिरिक्ता १५९
नोपादाना श्री०॥श्री०॥

गा॰ अन्यथैतेन वह्निमत्त्वं शृणोमीति प्रयोगः इति ध्येयम्। अथैवमपि धूमपरामर्शमात्रदशायामप्येतेनोद्देश्यतानिरूपितवह्निवि
धेयताकालोकलिङ्गकानुमितिर्जायतामितीच्छाबलाद्धूमलिङ्गकवह्न्यनुमित्यापत्तिः तादृशेच्छायामपि तादृशसाध्यवि
धेयकत्वप्रकारकत्वादनुमितिविषयकत्वाच्च न च किञ्चिल्लिङ्गकत्वाप्रकारकत्वमपीच्छाविशेषणं देयमतो न तादृशेच्छा
बलाद्धूमलिङ्गकानुमित्यापत्तिरिति वाच्यम् तथा सति तादृशवह्निविधेयताकधूमलिङ्गकानुमितिर्जायतामितीच्छासत्त्वेऽपि धूमलि
ङ्गकवह्न्यनुमितिर्न स्यात् न च तद्धर्मावच्छिन्नलिङ्गकानुमितौ तदन्यधर्मावच्छिन्नलिङ्गकत्वानुप्रकारकेच्छोत्तेजिका
वाच्येति धूमलिङ्गकत्वप्रकारतायास्संग्रहे भिन्नभिन्नलिङ्गकत्वप्रकारकेच्छायावारणञ्च सम्भवतीति वाच्यम्। एवमपि
तादृशवह्निविधेयताकधूमलिङ्गकानुमितिरालोकलिङ्गकानुमितिश्च जायतामितीच्छाबलाद्धूमलिङ्गकानुमितेरशक्यो
पपादनत्वादिति चेत् मैवं तद्धर्मावच्छिन्नलिङ्गकानुमितौ निरुक्तवह्निविधेयकत्वप्रकारतानिरूपिततद्धर्मावच्छिन्नलिङ्गक
त्वप्रकारकत्वानिरूपितानुमितिनिष्ठविशेष्यताशालित्वेनैवोत्तेजकत्वस्योपगन्तव्यत्वात् उक्तसमूहालम्बनेच्छायान्त्वनुमितौ
विशेष्यताद्वयमेका धूमलिङ्गकत्वप्रकारतानिरूपिता अपरा चालोकलिङ्गकत्वप्रकारतानिरूपिता समूहालम्बने प्रकारताभे
देनैव विशेष्यताभेदात् अन्यथा वृक्षः कपिसंयोगवांस्तदभाववांश्चेति समुच्चयस्य वृक्षः कपिसंयोगी न वेति संशयस्य भेदो न स्यात् एक
धर्मावच्छिन्नविशेष्यकसमूहालम्बनेऽपि प्रकारताभेदेन विशेष्यताभेदः संशये चोभयप्रकारतानिरूपितैकविशेष्यतैवेत्येव तयोर्वै
लक्षण्यात् इत्थञ्च धूममात्रलिङ्गकानुमितित्वमेवैतादृशेच्छाविरहविशिष्टसिद्ध्यभावकार्यतावच्छेदकं वाच्यम् अन्यथा धूमा
लोकोभयपरामर्शाभ्यां धूमलिङ्गकत्ववदालोकलिङ्गकानुमितिर्जायतामित्येकविशिष्टापरवैशिष्ट्यावगाहिज्ञानबलात्तादृशा
नुमाने वह्न्यनुमितावुक्तसिद्ध्यभावस्य व्यभिचारापत्तेः अथवा किञ्चिल्लिङ्गकत्वाप्रकारकत्वमेवेच्छाविशेषणमुपादेयम्।
धूमलिङ्गकत्वप्रकारकेच्छायाः पृथगेवोत्तेजकत्वस्य कल्पनीयतया तदसंग्रहो न दोषायेति कृतम्पल्लवितेन॥ ६॥ ६॥

का॰सु॰ रा॰। यादृशसिद्धिसत्वेपर्वतोवन्हिमानित्यनुमितिः तादृशसिद्धिः तादृशानुमितौप्रतिबन्धिकेत्युक्तौतादृशानुमितौपर्वतोवन्हिमानित्या
दि॰ग॰ कारकसिद्धेरपिप्रतिबन्धकत्वन्नस्यात् तादृशसिद्धिसत्वेपिसिषाधयिषयानुमित्युत्पादादत उक्तम् सिषाधयिषेत्यादि पर्वतत्वावच्छिन्ने
१५५ दि॰ सिषाधयिषाकालेपर्वतोवन्हिमानितिसिद्धिसत्वेपिपर्वतोवन्हिमानित्यनुमित्युत्पन्नेस्तादृशसिद्धेर्नतादृशानुमितिम्प्र
तिप्रतिबन्धकत्वंस्यादत उक्तं सिषाधयिषाविरहकाल इति विशिष्येति पर्वतोवन्हिमानित्यनुमितौ पर्वतत्वावच्छिन्न
विशेष्यतानिरूपितवन्हित्वावच्छिन्नप्रकारताशालिनिश्चयत्वेनप्रतिबन्धकतावच्छेदकत्वमित्यर्थः तत्प्रयोजनमाह तेने
ति सिद्धिरेवेत्येवकारेणसामानाधिकरण्येनसिद्धिव्यवच्छेदः सामानाधिकरण्येनानुमितिम्प्रतित्विति। सामान्याधिकरण्य
मात्रेणानुमितिम्प्रतीत्यर्थः अन्यथावच्छेदकावच्छेदेनानुमितेरपिसामानाधिकरण्यावगाहितयातद्व्यवच्छेदाय

मू॰ परंतु पक्षतावच्छेदकसामानाधिकरण्येनसाध्यसिद्धावपि तदवच्छेदेनानुमितेर्दर्शनात् पक्षताव
च्छेदकावच्छेदेनानुमितिम्प्रतिपक्षतावच्छेदकावच्छेदेनसाध्यसिद्धिरेव प्रतिबन्धिका पक्षताव
च्छेदकसामानाधिकरण्येनानुमितिम्प्रतितुसिद्धिमात्रंविरोधि इत्यनुबोध्यम्॥ ६ ॥ ६ ॥

नीतेः सिद्धिमात्रमिति पक्षविशेष्यकसाध्यप्रकारकनिश्चयत्वेन विरोधित्वमित्यर्थः उपाध्यायास्तु सिषाधयिषा।
विरहविशिष्टस्यसिद्धिप्रत्यक्षसामग्र्योरन्यतरस्याभावः पक्षतातेनसिद्धिकालेसमानविषयकप्रत्यक्षसामग्रीका राम
लेचनानुमित्यापत्तिरित्याहुस्तद्दूषयितुम्प्रत्यक्षसामग्र्यभावस्यपक्षताकुक्ष्यप्रवेशेप्रत्यक्षसामग्रीकालेकथन्नानुमिति १५०
रित्युत्कटशिष्यजिज्ञासानुत्पादार्थम्प्रथमतः स्वसिद्धान्तमाह। इत्यनुबोध्यमित्यादिना॥ “तिसिषाधयिषाविरह इत्यादिकम्परि
चायकमात्रं अन्यथाविशेष्येत्यस्यवैयर्थ्यापत्तेरितिभावः भिन्नविषयक प्रत्यक्षसामग्रीसत्वेपिसिषाधयिषांविनैवानुमित्युत्पादात् प्र॰॥

रा० प्रत्यक्षसामग्रीत्यस्य समानविषयकप्रत्यक्षसामग्रीपरतां दर्शयति तेनेति ननु वह्न्यादौ चक्षुस्सन्निकर्षदशायां वह्निव्याप्यधूमवान्पर्वत इति ज्ञानवतो वह्नेः प्रत्यक्षेणानुमितिर्निमित्तेनैव मूलेकुतो नोक्तं किं संशयोत्तरप्रत्यक्षस्थलानुरोधेनेत्याशङ्कां निरसितुमाह एतादृशेति। तद्विषये प्रत्यक्षविषये विषयित्वसम्बन्धस्यार्थः तस्य चानुमितावन्वयः तथाच प्रत्यक्षविषयसाध्यविषयिकानुमिति सामग्रीप्रदर्शनार्थमित्यर्थः स्वातन्त्र्येणेति प्रत्यक्षसामग्र्यनन्तर्गतत्वेनेत्यर्थः प्रयासापत्तेरिति एकसामग्रीप्रदर्शनेनैवोभयसामग्रीप्रदर्शनोपपत्तौ पृथक्सामग्रीप्रदर्शनस्यानुचितत्वादिति भावः। ननु पक्षताकुक्षिप्रविष्टत्वेन प्रतिबन्धकत्व एव लाघवम् एकप्रतिबन्धकतयैवोपपत्तेरित्याशङ्कां निरा

दि० संशयोत्तरप्रत्यक्षं प्रति हेतुभूतस्य विशेषदर्शनस्य सत्त्वादिति भावः एतादृशप्रत्यक्षसामग्रीविशेषपर्य्येन्तानुधावनं च तद्विषयेऽनुमितिसामग्रीसम्पत्तिप्रदर्शनार्थं स्वातन्त्र्येणानुमितिसामग्रीप्रदर्शनेन प्रयासापत्तेः स्वातन्त्र्येणेति ननु

मु० यत्रायम्पुरुषो नवेति संशयानन्तरम्पुरुषत्वव्याप्यकरादिमानयमिति ज्ञानम् तत्रासत्यामनुमित्सायाम्पुरुषस्य प्रत्यक्षम्भवति न त्वनुमितिः अतोऽनुमित्साविरहविशिष्टसमानविषयकप्रत्यक्षसामग्रीकामिनीजिज्ञासादिवत्स्वातन्त्र्येण प्रतिबन्धिका॥ ९ पक्षताकुक्षिप्रविष्टत्वेनेत्यर्थः शाब्दसिद्धौ सत्यामशाब्दज्ञानं जायतामितीच्छायामनुमितेरुत्पादात्सिद्धावनुमितिगोचरेच्छात्वेन न तादृशेच्छाकाले प्रत्यक्षसामग्रीकालेऽनुमित्यनुत्पादनसामग्र्यामनुमितित्वप्रकारकेच्छात्वेनोत्तेजकत्वस्यावश्यकतया एकरूपेणोत्तेजकत्वासम्भवात्॥ ८ ॥

कत्तु मे कप्रतिबन्धतैव न संभवति भिन्नभिन्नरूपेणेच्छायाः सिद्धौ सामग्र्याञ्चोत्तेजकत्वस्य वाच्यत्वादित्याह शाब्देत्यादि नीलइत्यादिवाक्यादित्यर्थः पर्वतो वह्निमानित्यादिवाक्यात्सिद्धेरप्रतिबन्धकत्वम्बोध्यम् अनुमिति गोचरेच्छात्वेनेति यथोक्तानुमितिगोचरेच्छानिष्ठतद्व्यक्तित्वेनेत्यर्थः उक्तानुगतेच्छानान्तद्व्यक्तित्वेनैवोत्तेजकतायाः पूर्वमुक्तत्वादिति ध्येयम् अनुमित्यनुत्पादेनेति प्रत्यक्षेणैव तादृशेच्छायाविषयसिद्धिसंभवादिति भावः अनुमितित्वप्रकारकेच्छात्वेनेति यद्यप्येवं सति वह्निप्रत्यक्षसामग्रीकाले प्रत्यक्षानतिरिक्तं ज्ञा-॥ ६ ॥ श्री० ॥

राद्धनेत्रायत्तामितीच्छायावद्धे ऽनुमितिर्नेस्यात् तथापिप्रत्यक्षान्यत्वप्रकारकेच्छान्वेनापिप्रत्यक्षसामग्र्याउन्नेजकत्वस्यकल्पनीयत्वाद्दो॰

का॰मु॰ राध्वनेत्रायत्तामितीच्छायावद्धे ऽनुमितिर्नेस्यात् तथापिप्रत्यक्षान्यत्वप्रकारकेच्छान्वेनापिप्रत्यक्षसामग्र्याउन्नेजकत्वस्यकल्पनीयत्वाद्विशिष्टच

दि॰रा॰ ष॰॥ चक्षुःसंयोगादिरूपेति यद्यपिचक्षुःसंयोगमात्रन्नसामग्रीतथाप्येकक्षणवृत्तित्वसम्बन्धेनतत्पुरुषीयविशेषणज्ञानादिविशिष्टच

१५१ क्षुःसंयोगस्यसामग्रीत्वसम्भवोवोध्यः विजातीयेति परमात्ममनसोः संयोगव्यावृत्तवैजात्यावच्छिन्नेत्यर्थः स्वातन्त्र्येणेति पक्षताकुक्ष्य

क्षुःसंयोगस्यसामग्रीत्वसम्भवोवोध्यः विजातीयेति परमात्ममनसोः संयोगव्यावृत्तवैजात्यावच्छिन्नेत्यर्थः स्वातन्त्र्येणेति पक्षताकुक्ष्य

न्तर्निविष्टत्वमुभयत्रसिषाधयिषाविरहस्यनैकसम्बन्धेनविशेषणत्वंसिद्धौसमवायघटितसामानाधिकरण्येनचक्षुःसं

यो॰ एवमुभयत्रसिषाधयिषाविरहस्यनैकसम्बन्धेनविशेषणत्वंसिद्धौसमवायघटितसामानाधिकरण्येनचक्षुःसं

दि॰ एवमुभयत्रसिषाधयिषाविरहस्यनैकसम्बन्धेनविशेषणत्वंसिद्धौसमवायघटितसामानाधिकरण्येनेत्येकरूपेण

योगादिरूपसामग्र्यान्तुस्वाश्रयचक्षुःसंयुक्तमनःप्रतियोगिकविजातीयसंयोगघटितसामानाधिकरण्येनेत्येकरूपेण

तयोःप्रतिवन्धकत्वासंभवादित्याशयइतिदिक् नन्वनुमितिम्प्रतिप्रत्यक्षसामग्र्याःस्वातन्त्र्येणप्रतिवन्धकत्वेभिन्नवि

षयेपिप्रत्यक्षसामग्रीकालेऽनुमित्यनुपपत्तिः मन्मतेतु अनुमानातिरिक्तप्रकृतसाध्यसाधकमानत्वेनपक्षताकुक्षौ

मु॰। एवम्परामर्शानन्तरम्विनाप्रत्यक्षेच्छांपक्षादेःप्रत्यक्षानुत्पत्तेः प्रत्यक्षेच्छाविर

हविशिष्टानुमितिसामग्रीभिन्नविषयकप्रत्यक्षेप्रतिवन्धिका॥ ७०॥ श्री॰ ॥

तस्याःप्रवेशेनोक्तापत्त्यनवकाशादतआह एवमिति अनुमितिसामग्रीप्रतिवन्धकेति तथाचभिन्नविषयकानुमिति

सामग्र्यभावघटितप्रत्यक्षसामग्र्यास्तत्राभावान्नपूर्वोक्तस्थलेऽनुमित्यनुपपत्तिरितिभावः यद्वानुमितिसामग्रीप्रतिवन्धि

कान्यनुमितिसामग्र्येवप्रतिवन्धिकानतुभिन्नेविषयेप्रत्यक्षसामग्र्यनुमितौप्रतिवन्धिकेत्यर्थः तथाचप्रत्यक्षसामग्र्याः

समानविषयकानुमितिम्प्रत्येवप्रतिवन्धकतयानपूर्वोक्तानुमित्यनुपपत्तिरितिभावः ७०॥ १ प्रविष्टत्वेनेत्यर्थः प्रत्यक्षसाम

ग्रीत्वप्रमाणेतियावत् अनुमानातिरिक्तेति सिषाधयिषाविरहविशिष्टसिद्ध्यनुमित्युपधायकातिरिक्तसिद्ध्युपधायकान्यतरत्वेनप्रति राम

वन्धकत्वादितिपर्यवसितोऽर्थः यथाश्रुतेनचक्षुषोऽनुमित्यनुपपत्तेरितिवोध्यम् ननुप्रत्यक्षसामग्रीययाभिन्नविषयकानुमितिसामग्र्य १५१

भावघटितातयाभिन्नवि॰॥ ६॥

षयकानुमितिसामग्र्यपि प्रत्यक्षसामग्र्यभावघटितेति भिन्नविषयकप्रत्यक्षानुमितेस्सामग्रीसमवधानदशायामनुमित्यनुप।
शा०। षयकानुमितिसामग्र्यपि प्रत्यक्षसामग्र्यभावघटितेति भिन्नविषयकानुमितिसामग्र्यभावादित्यत आह यद्वेति
पत्तिरशक्यसमाधिरेवानुमितिमप्रतिप्रत्यक्षसामग्रीत्वेन प्रतिबन्धकतया तदभावघटितभिन्नविषयकानुमितिसामग्र्यभावादित्यत आह यद्वेति
॥ विजयलक्षणेत्यादेः सद्धेतुनिरूपणानन्तरमित्यादिः वादिनो विजयस्वरूपं यदेकं कार्यं तत्कारित्वं तत्प्रयोजकत्वमित्यर्थः स्वोक्तहेतोः सद्धे
तुत्वप्रतिपादनेनैव परोक्तप्रतिहेतोर्दुष्टत्वप्रतिपादनेनापि कथायां वादिनो विजयादिति भावः विजयेत्युपलक्षणमनुमितिलक्षणतत्त्वनिर्णे

दि०। हेत्वाभासानिति विजयलक्षणैककार्यकारित्वमत्र सङ्गतिर्बोध्या ननु लक्षणात्मकसाधारणधर्मज्ञानं विना

मु०। हेतुप्रसङ्गाद्धेत्वाभासान्विभजते अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः कालात्ययापदि।
दिष्टश्च हेत्वाभासाश्च पञ्चधा ७१ साधारणस्तु स्यादसाधारणकोऽपरः तथैवानुपसंहारी त्रिधाऽनै
कान्तिको भवेत् ७२ तल्लक्षणं तु यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तत्त्वम्॥ श्रीः॥

विशेषजिज्ञासानुदयाद्विभागो निष्प्रयोजक इत्यतो लक्षणमाह तल्लक्षणन्त्विति हेत्वाभासलक्षणन्त्वित्यर्थः॥

योऽप्यत्रैकं कार्यमित्यपि बोध्यम् ७० साधारणधर्मज्ञानं विनेति तद्धर्मावान्तरधर्मप्रकारकज्ञानगोचरेच्छाम्प्रति तद्धर्मज्ञानस्य हेतुत्वादि
ति भावः निष्प्रयोजक इति नास्ति प्रयोजकं यस्मिन्निति व्युत्पत्त्या प्रयोजकशून्य इत्यर्थः विभागे शिष्यजिज्ञासाया एव प्रयोजकत्वादिति।
भावः हेत्वाभासलक्षणन्त्विति हेतोराभासा दोषा इति व्युत्पत्त्या हेतुदोषलक्षणन्त्वित्यर्थः यद्यपि दुष्टहेतूनामेव विभजनात् दुष्टहेतुलक्ष
णमेव वक्तव्यम् तथापि दोषज्ञाने जाते दोषवत्त्वरूपदुष्टत्वलक्षणस्य ज्ञातुं शक्यत्वाद्दोषः एव त्वत्र मूले हेत्वाभासा इति पदं हेतुवदाभा
सन्त इति व्युत्पत्त्या दुष्टहेतुपरमेवेति मन्तव्यम्॥

प्रतिबन्धकतो॰त्रु॰पं॰।३॥



व्यत्वेप्यवच्छेदकतापर्याप्तिनिवेशे वन्ह्यभाववद्धृदविषयत्वेप्यवच्छे
रा॰। वन्ह्यभावे व्याप्तिरिति तथाच सद्धेतोरपि दुष्टत्वापत्तेरिति भावः नचेति नन्ववच्छेदकतापर्याप्तिः नचैतत्त्रितयसहितयद्विषयक
दकतापर्याप्तिविरहात् अप्रामाण्यज्ञानानास्कन्दितत्वानाहार्यनिश्चयत्वान्तर्भावेनैवावच्छेदकतापर्याप्तिः नचैतत्त्रितयसहितयद्विषयक
त्वेन प्रतिबन्धकतावच्छेदकतापर्याप्तिस्तत्त्वमिति विवक्षणान्न दोष इति वाच्यम्। विशिष्टविषयकत्वेन वन्हित्वादीनां गुरुत्वाद्यवगाहिभ्र
माणामप्रतिबन्धकत्वानुपपत्त्या निरूप्यनिरूपकभावापन्नविषयिताशालिनिश्चयत्वेनैव प्रतिबन्धकतायावक्तव्यतया विशिष्टविषय
कत्वादिसमुदायत्वस्यन्यूनवृत्तितया पर्याप्त्यनवच्छेदकत्वान्नच प्रमात्मकज्ञानीयनिरूप्यनिरूपकभावापन्नविषयितैव विशिष्टविषा।

दि॰। लक्ष्येलक्षणङ्गाहयति तथाहीति तेव्यभिचारादयः ननु यद्विषयिकत्वेत्यत्र तृतीयार्थोऽवच्छेदकत्वन्तथाच वन्हिमा
न् धूमादित्यत्र वन्ह्याभावेऽतिव्याप्तिः पर्वतविशेष्यकवन्ह्यभावप्रकारकनिर्णयत्वेन वन्ह्यनुमितिम्प्रति प्रतिबन्धकत्वे
न वन्ह्यभावविषयकत्वस्य प्रतिबन्धकत्वावच्छेदककोटिप्रविष्टत्वात् नच स्वरूपसंबंधरूपावच्छेदकतापर्याप्त्यधिकरा।

मु॰। तथाहि व्यभिचारादिविषयकत्वेन ज्ञानस्याऽनुमितिविरोधित्वात्ते दोषाः॥

णत्वमनतिरिक्तवृत्तित्वं वाऽवच्छेदकत्वन्तृतीयार्थः वन्ह्यभावविषयकत्वस्यावच्छेदककोटिप्रविष्टत्वेप्यवच्छेदा।
कतापर्याप्त्यनधिकरणत्वा दतिरिक्तवृत्तित्वाच्च नातिव्याप्तिरिति वाच्यम् पर्याप्तिनिवेशेऽसम्भवापत्तेः अप्रमाण्यज्ञा
नानास्कन्दितत्वस्याधिकस्य प्रतिबन्धकतावच्छेदककोटिप्रविष्टत्वात्॥ श्रीः॥ ९ यितेति निरूप्यनिरूपकभावाप
न्नविषयितात्वेन विशिष्टविषयितानाम्प्रतिबन्धकतावच्छेदकतापर्याप्तिरस्त्वेनैवेतिवाच्यम् प्रत्येकावृत्तेस्तत्समुदायवृत्तिनियमेनैकदे
शातिव्याप्तिवारणाय पर्याप्त्यवच्छेदकतापर्यन्तनिवेशस्यावश्यकतया यादृशविशिष्टविषयितायामवच्छेदकतापर्याप्तेः कथञ्चिदा। राम॰
प्यसम्भवादत आह अनतिरिक्तवृत्तित्वं वेति प्रतिबंधकताशून्यावृत्तित्वमेव प्रतिबन्धकतावच्छेदकत्वन्तथाच वन्ह्यभावप्रकारत्वादे १५२
रप्रतिबन्धकधर्मितावच्छेदकज्ञानसाधारणत्वान्न वन्ह्यभावादावतिव्याप्तिरिति भावः॥ ९ ॥ श्रीः॥ ९ ॥ श्रीः॥

गा०। पूर्वोक्तरीत्येति विशिष्टस्यप्रसिद्धानतिरिक्ततयाह्रद इत्यप्रतिबन्धकज्ञानस्यापिविशिष्टविषयकतयेत्यर्थः एवंरीत्याक्वापिलक्षणा

टि०। अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशेह्रदोवन्हिमान्धूमादित्यादौवन्ह्यभावविशिष्टह्रदादावव्याप्त्यापत्तेः प्रतिबन्धकत्वाभाववतिह्रदइत्येतादृशज्ञानेवन्ह्यभावविशिष्टह्रदविषयकत्वस्यसत्वात् विशिष्टह्रदस्य ह्रदानतिरेकादतआह यद्विषयकत्वञ्चेति एतद्विवक्षणप्रयोजनमाह तेनेति बाधभ्रमस्यबाधभ्रमसाधारणस्यपर्वतविशेष्यकवन्ह्यभावप्रकारकत्वादेरित्यर्थः अनुमितिविरोधित्वेपि अनुमितिविरोधितावच्छेदकत्वेपि नक्षतिः नवन्ह्यभावादावतिव्याप्तिः इतरथावन्ह्यभावविषयकत्वस्यपर्वतविशेष्यकवन्ह्यभावप्रकारकत्वरूपानुमितिप्र

मू०। यद्विषयकत्वञ्चयादृशविशिष्टविषयकत्वंबोध्यम् तेनबाधभ्रमस्यानुमितिविरोधित्वेपिनक्षतिः तत्रपर्वतोवन्ह्याभाववान् इतिविशिष्टस्याप्रसिद्धत्वान्नहेतुदोषः नचयत्रवन्ह्यभावव्याप्यपाषाणमयत्ववानितिपरामर्शकालेवन्हिव्याप्यधूमस्याभासत्वन्नस्यात्॥ श्रीः ॥

तिबन्धकतावच्छेदककोटिप्रविष्टत्वान्नत्रातिव्याप्तिः स्यादितिभावः यादृशविशिष्टेति विवक्षितेतु तत्रनातिव्याप्तिरित्याह तत्रेत्यादिना नचवन्ह्यभावविशिष्टपर्वतस्याप्रसिद्धत्वेपियादृशविशिष्टपदेनवन्ह्यभावत्वविशिष्टंवन्ह्यभावमुपादायतत्रातिव्याप्तिरितिवाच्यम् यादृशविशिष्टेति विवक्षणेऽनतिरिक्तवृत्तित्वस्यैवावच्छेदकात्वस्यलक्षणेनिवेशनीयतयावन्ह्यभावविषयकत्वस्य प्रतिबन्धकत्वाभाववति वन्ह्यभावइतिज्ञानेवृत्तेस्तत्रातिव्याप्तेरभावात् नचैवम्पूर्वोक्तरीत्यावन्ह्यभावविशिष्टह्रदादावव्याप्तिरितिवाच्यं॥

गमनादव्याप्तिपदंकेवलंलक्षणासत्वपरमेव तथाचासम्भव एवेतिपर्यवसितम्॥ श्रीः॥ श्रीः॥ श्रीः॥ श्रीः॥ श्रीः॥

का॰मु॰ रा॰। यद्रूपावच्छिन्नेति नन्वेवन्तत्त्वं वन्ह्यभाववद्ध्रदत्वादावेव न तु दोषे वन्ह्यभाववद्ध्रदादावितिकथन्तस्य दोषलक्षणत्वमत आह न
टि॰रा॰ त्वमित्यस्येति ननु यद्रूपपदेन वन्ह्यभाववद्ध्रदत्वमेव ग्राह्यन्तच्च सामानाधिकरण्यसम्बन्धेन वन्ह्यभावविशिष्टह्रदत्वमेव कर्मधार
१५३ योत्तरभावप्रत्ययस्य पदार्थेनावच्छेदकीयसामानाधिकरण्यवाचकत्वादिति दीधितिसुक्तेः तदवच्छिन्नाच विषयिताना प्रतिबन्धक
भूतज्ञाने ह्रदो वन्ह्यभाववानिति ज्ञाने सामानाधिकरण्यसंबन्धेन ह्रदत्वे वन्ह्यभावस्याप्रकारत्वादित्यत आह वन्ह्यभावावच्छिन्नेति

टि॰। यादृशविशिष्टविषयकत्वेनेत्यस्य यद्रूपावच्छिन्नविषयकत्वेनेत्यर्थकत्वात्तत्त्वमित्यस्य च तद्रूपत्वमित्यर्थकत्वात्
ह्रदइतिज्ञाने च वन्ह्यभावावच्छिन्नह्रदत्वावच्छि‾‾‾न्नविषयकत्वाभावात् अथात्रानतिरिक्तवृत्तित्वरूपस्यावच्छे।
दकत्वस्य विवक्षणेऽनुमितिप्रति वन्धकत्वाभाववति ह्रदो वह्निमान्नवेति संशये वन्ह्यभाववान्ह्रदो वन्हिमानित्याहा
र्य्यनिश्चयेऽप्रामाण्यज्ञानास्कन्दितताद‍ृशनिश्चये च वन्ह्यभावविशिष्टह्रदविषयकत्वस्य सत्वादसंभव इति चेन्न ज्ञा

मु॰। तत्र वन्ह्यभावव्याप्यवान् पक्ष इति विशिष्टस्याप्रसिद्धत्वादिति वाच्यम्॥

नस्येत्यत्र ज्ञानपदस्यानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयपरतया ताद‍ृशनिश्चयनिष्ठयादृशविशिष्टविष
यकत्वमनुमितिप्रतिवन्धकतानतिरिक्तवृत्तितत्त्वमित्यर्थलाभादिति दिक् सत्प्रतिपक्षस्यानित्यदोषत्ववादी शङ्क
ते नचेति विशिष्टस्याप्रसिद्धत्वादिति पाषाणमयत्वे वन्ह्यभावव्याप्यत्वाभावादिति भावः॥ १ तथाच वन्ह्यभाववद्ध्रद
त्वोभयमेव तत्र यद्रूपपदेन ग्राह्यन्न तूक्तं विशिष्टं येनोक्तदोषस्स्यात् निर्धर्मितावच्छेदकवन्ह्यभावविशिष्टह्रदत्ववानित्यप्रतिव राम
न्धकज्ञानेऽप्युक्तयद्रूपावच्छिन्नविषयतासत्वेनेति भावः ह्रद इति ज्ञानेऽपि ह्रदत्वावच्छिन्नविषयितासत्वात् वन्ह्यभावावच्छिन्ना। १५३
विषयत्वाभावादेवोभयावच्छिन्नविषयताविरह इति सूचनायेव ग्रन्थकृता वन्ह्यभावावच्छिन्नविषयिताविरहमात्रम्प्रद॥ ६॥

ग० र्मितन्नतुवन्ह्यभावमात्रंयद्रूपपदग्राह्यमितितदभिप्रायः तथासतिकेवलवन्ह्यभावावच्छिन्नविषयितायाअप्रतिबन्धक
वन्ह्यभाववानिति निर्धर्मितावच्छेदकज्ञानसाधारण्येनवन्ह्यभावमात्रंयद्रूपपदेनोपादायलक्षणागमनादितिबोध्यम्। अथै
वंवन्ह्यभाववद्ध्रदत्वोभयावच्छिन्नविषयित्वंवन्ह्यभाववद्ध्रदोभयनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपकत्वमेव तच्चाप्रतिबन्ध
कत्वएकत्रद्वयमितिरीत्यावन्ह्यभाववद्ध्रदत्वोभयप्रकारकेवन्ह्यभावावच्छिन्नविशेष्यकह्रदत्वप्रकारकेचज्ञानेवर्ततइतिता
दृशविषयितायाःप्रतिबन्धकतातिरिक्तवृत्तित्वादसम्भवइतिचेदत्रकेचित् यद्रूपावच्छिन्नप्रकारतानिरूपितयद्रूपावच्छि
न्नविशेष्यतानिरूपकत्वमनुमिति प्रतिबन्धकतानतिरिक्तवृत्तितद्रूपावच्छिन्नविशिष्टतद्रूपावच्छिन्नोद्देशइत्यर्थेतात्प
र्यात् वन्ह्यभावत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यतानिरूकत्वस्यानुमिति प्रतिबन्धकतानतिरिक्त
वृत्तित्ववतिवन्ह्यभावत्वावच्छिन्न विशिष्टोह्रदत्वावच्छिन्नोद्देशइत्याहुः तदसत् तथासतिघटोनद्रव्यमित्यनुमितिप्र
तिबन्धकीभूतघटोद्रव्यमितिनिश्चयविषयमुद्रद्रव्यत्वविशिष्टघटादावव्याप्तिप्रसङ्गात् यद्रूपावच्छिन्नप्रकारतात्वेन
द्रव्यत्वप्रकारतायाउपादातुमशक्यत्वात्तस्या निरवच्छिन्नत्वात् परेतुयद्रूपपदेनवन्ह्यभावधर्मितावच्छेदकतापन्नह्र
दत्वादिकमेवग्राह्यम् धर्मितावच्छेदकतापन्नह्रदत्वापन्नत्वंस्वविषयितायां धर्मितावच्छेदकतानिरूपितस्वनिरूपकता
वच्छेदकताकत्वंह्रदोवन्ह्यभाववानिति ज्ञानीयविषयितानिरूपकतावच्छेदकतैववन्ह्यभावधर्मितावच्छेदकतानिरूपिताए
कविषयकज्ञानीयप्रकारताविशेष्यतयोर्विशेष्यताप्रकारत योर्भेदवादिमतेनिरूप्यनिरूपकभाववत् धर्मितावच्छेदकत्वविष
यितानिरूपकतावच्छेदकतयोरपिनिरूप्यनिरूपकभावोभ्युपेयः ह्रदत्वावच्छिन्नविशेष्यकवन्ह्यभावप्रकारकज्ञानस्यैववन्ह्य
भावधर्मितावच्छेदकतापन्नह्रदत्वावच्छिन्नविषयकत्वमप्रतीत्यनुरोधादितिवदन्ति केचित्तुवन्ह्यभावह्रदत्वोभयप्रकारकज्ञानस्य
समूहालम्बनतयातत्रप्रकारताभेदेनविशेष्यतायाभिन्नत्वेनतत्रोभयप्रकारतानिरूपितविशेष्यतानिरूपकत्वंवन्ह्यभावधर्मि
तावच्छेदकज्ञानीयविषयितावारणायप्रकृतानुमित्यनिरूपितप्रतिबन्धकतानवच्छेदकत्वेनविशेषणीयायद्रूपावच्छिन्नवि
विषयितायुक्तज्ञाने

ता।उभयप्रकारतानिरूपितैकविशेष्यतासत्त्वेपितस्यावन्ह्यभाववान् ह्रदइतिज्ञाननिरूपितप्रकारतानुमित्यनिरूपितप्रतिबन्ध
कतावच्छेदकत्वोक्तिमादाय नासम्भव इत्याहुः तदप्यसत् वन्ह्याभाववद्ध्रदादिविषयितायाअपिह्रदोनवन्ह्यभाववानित्यादि।
ज्ञाननिरूपितप्रतिबन्धकतायामवच्छेदकत्वेनासम्भवप्रसङ्गात् प्रतिबध्यताभेदेनप्रतिबन्धकताभेदादिति अथजातित्वेन
ह्रदत्वावगाहिजातिमान्वन्ह्यभाववानित्यप्रतिबन्धकज्ञानेपियद्रूपावच्छिन्नविषयितासत्त्वेनासम्भवापत्त्यायद्रूपावच्छि।
न्नविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्यद्रूपावच्छिन्नविषयतात्वंतत्तद्रूपावच्छिन्नविषयिताशू
न्यज्ञानीयत्वेनविशेषणीयायद्रूपावच्छिन्नविषयितासत्त्वेएवञ्चतादृशज्ञानीययद्रूपावच्छिन्नविषयितास्वरूपसम्बन्धरू
पावच्छेदकतावत्तीतद्रूपावच्छिन्नोदोषइत्युक्तौवसामञ्जस्येप्यर्थेमतिविरुक्तवृत्तित्वरूपावच्छेदकत्वानुधावनम् ह्रद
त्वावच्छिन्नविषयितादिशून्यज्ञानीयवन्ह्यभावविषयकत्वस्यप्रतिबन्धकतानवच्छेदकत्वेनैकदातिव्याप्तेरयोगादि।
तिचेन्न संयोगस्संयोगवानिति बाधभ्रमविषयसंयोगत्वविशिष्टेऽतिव्याप्तेर्दुर्वारत्वात् तत्रसंयोगत्वाद्यवच्छिन्नविष।
यितानांसंयोगत्वविशिष्टविषयकत्वव्यापकत्वात् संयोगवत्संयोगाप्रसिद्ध्यातत्त्वावच्छिन्नविषयितायायद्रूपावच्छिन्न
विषयितात्वेनगृहीतुमशक्यत्वात् नचसंयोगावच्छिन्नेवविषयितासंयोगत्वविशिष्टविषयकत्वव्यापिकातत्रातिव्याप्तिः
संयोगवतस्तत्रापिविषयत्वेपिसंयोगानिष्ठविषयितानिरूपकतायांव्यधिकरणीभूयसंयोगस्यावच्छेदकत्वादितिवाच्यम्।
संयोगत्वेनसंयोगप्रकारकोक्तभ्रमेतस्याप्यभावात् अथैवमप्यभावत्वेनह्रदत्वावगावन्हित्यामभाववान् वन्ह्यभाववानिति।
वुद्धावपिवन्ह्यभावह्रदत्वोभयावच्छिन्नविषयितासत्त्वेन तत्रचयद्यद्रूपावच्छिन्नविषयितात्वमुक्तोभयावच्छिन्नविषय
तासमानाधिकरणाभावप्रतियोगितावच्छेदकता तद्रूपावच्छिन्नविषयिताशून्यत्वमप्यक्षतमेव अभावत्वावच्छि राम
न्नविषयितात्वस्यानयात्वात्तादृशबुद्धेरनुमित्यप्रतिबन्धकत्वाच्चासम्भवोदुर्वारइतिमैवम् यत्सम्बन्धावच्छिन्नयद्रूपा १५४
वच्छिन्नविषयितात्वन्तादृशाभावप्रतियोगितावच्छेदकन्तत्सम्बन्धावच्छिन्नतद्रूपावच्छिन्न·॥ ९ ॥ ९ ॥

ता०। विषयितासून्यत्वस्य ज्ञानविशेषणत्वेन विवक्षणीयत्वात् उक्तज्ञानस्य च तथाविधसमवायसंम्बन्धावच्छिन्नाभाववत्त्वावच्छि-
न्नाविषयितावत्वेन वारणसम्भवात् न चैवमपि यत्र तत्तद्व्यक्तित्वेन ह्रदादेः पक्षता तत्राभावत्वेन तद्व्यक्तित्वावगाह्यप्रतिवंधकज्ञानवारणा-
मशक्यमेवेति वाच्यम् तद्व्यक्तित्वस्य जात्यतिरिक्तस्य स्वरूपतो भानासंभवेन तद्व्यक्तीतरावृत्तित्वेनैव तस्य पक्षतावच्छेदकतया वक्तव्यत-
याऽभावत्वेन तत्तद्व्यक्तित्वावगाहिज्ञानस्य यद्रूपावच्छिन्नाविषयकत्वात् यदि चानवस्थाभयेन तद्व्यक्तित्वं जात्यतिरिक्तमपि स्वरूपतो
भासत इत्येवाङ्गीकरणीयं गत्यन्तराभावादिति विभाव्यते तदा स्वनिरूपितविषयितानिरूपितत्वस्वभिन्नत्वोभयसम्बन्धेन यद्रूपावच्छि-
न्नविषयिताविशेषस्तद्रूपावच्छिन्नविषयितात्वं तादृशाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयिताविशिष्टतद्रूपावच्छिन्नविष-
यिताविशेषशून्यज्ञानीयत्वेन लक्ष्यतावच्छेदकविशेषणीयावन्ह्यभावत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपिताभावत्वाव-
च्छिन्नप्रकारताशालित्वादेवाभाववान् वन्ह्यभाववानिति ज्ञानवारणमवसेयं वन्ह्यभावत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरू-
पितस्वात्मकाभावत्वावच्छिन्नप्रकारतया वन्ह्यभाववान् ह्रद इति ज्ञानेपि सत्वेन तद्रूपावच्छिन्नविषयिताविशिष्टतद्रूपावच्छिन्नविषयि-
तात्वस्याभावप्रतियोगितावच्छेदकत्वोपपत्तये स्वभिन्नत्वप्रवेश इति निपुणतरमूहनीयम् यद्यप्येवंसति अनतिरिक्तवृत्तितयात्वानुधा-
वनमफलम् संसर्गत्वावच्छिन्नप्रकारतानिरूपितसंसर्गविषयितानिरूपितसंयोगत्वावच्छिन्नविशेष्यताशालित्वादेवोक्तभ्रमवारण-
सम्भवेनोक्तप्रयोजनासंभवात् तथाऽपि पाषाणमयो न वन्हिमानिति ज्ञानकालीनस्य पर्वतः पाषाणमय इति ज्ञानस्याप्यवच्छेदकधर्मदा-
र्शनविधयाऽनुमितिप्रतिबन्धकत्वेन तद्विषये पाषाणमयपर्वतेऽतिव्याप्तिः अनतिरिक्तवृत्तित्वनिवेशे तु पाषाणमयो न वन्हिमानिति ज्ञा-
नशून्यकालीनतादृशज्ञानस्यात्रातिव्याप्तिः तादृशनिश्चयनिष्ठेति तथा च ज्ञानस्येत्यत्र षष्ठ्यर्थो निष्ठत्वम् तस्य च यद्विषयकत्वेऽन्व-
यः तथा च वन्ह्यभाववद्ध्रदविषयत्वस्यानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वेपि तादृशनिश्चयवृत्तित्वविशिष्टस्य तस्यानतिरिक्तवृ-
त्तित्वान्नासम्भव इति भावः यद्यपि विशेष्यीभूतवन्ह्यभाववद्ध्रदविषयत्वस्य प्रतिबन्धकतानतिरिक्तवृत्तित्वविशिष्टेपि तस्मिन्ननतिरिक्त-
वृत्तित्वं दुर्घटम् विशिष्टस्य शुद्धानतिरिक्ततया गुणान्यत्वविशिष्टसत्तायावृत्तित्वाभ्युपगमात् न च तादृशनिश्चयवृत्तित्वविशिष्टयद्रूपा-
वच्छिन्नविषयितात्वमनुमितिप्रतिबन्धकताशून्यनिरूपिताधेयतानवच्छेदकमिति विवक्षणीयमिति वाच्यम् तादृशविशिष्टविषयितो-

का॰मु॰ दि॰रा॰ १५५ रा०। त्वस्य वैशिष्ट्य विषयितात्वोभयरूपतया तयोः प्रत्येकम्प्रतिव न्धकताशून्यवृत्तितावच्छेदकतयोभयस्मिंस्तादृशवृत्तिताव।
वच्छेदकत्वस्योपपादयितुमशक्यत्वात् व्याप्तिस्वव्यापकतत्कत्वमेवानतिरिक्तवृत्तित्वन्तया च तादृशनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छि
न्नविषयिताव्यापकमनुमितिप्रतिबन्धकत्वन्तद्रूपावच्छिन्नो दोष इत्यर्थपर्यवसानाद्व्यापकताशरीरे च विशिष्टाधिकरणताप्रवेशान्नो
क्तदोषावकाशः तादृशनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयितात्वावच्छिन्नाधिकरणतायां वा प्रतिबन्धकताशून्यावृत्ति
त्वं विवक्षणीमिति ध्येयम् अत्रेदमवधेयम् जलवत्त्वावच्छेदेन वन्ह्यभाववत्त्वघटितस्य वन्ह्यभाववज्जलवद्वृत्तिजलव
ह्रदन्यबाधाद्यवनन्तर्भूतत्वेन अभाववद्वृत्त्यभावस्यावच्छेदकधर्मदर्शनविधया अनुमितिप्रतिबन्धकतातदनतिरिक्तवृत्ति।
विषयिताकतया तत्रातिव्याप्तिः नच पक्षे साध्यग्रहप्रतिबन्धकतावच्छेदकतया सत्प्रतिपक्षभिन्नतया चाभाव एव तदन्तर्भावो
स्तीति वाच्यम् तथा सति यो यत्र यादृशोपि हेत्वाभासस्तत्र तद्व्याप्योपि तत्रैवान्तर्भवतीत्यत्र तदवच्छेदकस्यापि तदन्तर्भावानुक्त्या
न्यूनताप्रसङ्गात् तस्मादवच्छेदकधर्मदर्शनविधया प्रतिबन्धकता न हेत्वाभासलक्षणघटिकेत्येव ग्रन्थकृतां तात्पर्यमित्यङ्गीक
रणीयत्वात् नच ज्ञानवैशिष्ट्यानवच्छिन्नत्वेन प्रतिबन्धकता विशेषणीया अवच्छेदकधर्मदर्शनस्य ज्ञानत्वेनैव प्रतिबन्धकतया नो
क्तविशिष्टेति व्याप्तिरिति वाच्यम् तथा सति जलव्यापको वन्ह्यभावो जलवान् ह्रद इति ज्ञानद्वयकालेपि ह्रदो वन्हिमानित्यनुमित्य
नुत्पादेन प्रतिपक्षविषयकज्ञानस्यापि ज्ञानविशिष्टज्ञानत्वेनैव प्रतिबन्धकताया वक्तव्यतया तत्रातिव्याप्तिप्रसङ्गात् नच व्याप
कसामानाधिकरण्यरूपव्याप्तिघटितस्य सत्प्रतिपक्षता न स्वीक्रियते किन्तु वन्हिमदवृत्तिपक्षस्यैव सत्प्रतिपक्षता अन्यथा जल
व्यापकवन्ह्यभावकालीनजलादावतिप्रसङ्गापातादिति वाच्यम् एवमपि साध्यव्यापकीभूताभावप्रतियोगिहेतुरूपविरोधाव्या
प्तेरपरिहारात् तस्यापि पक्षधर्मताज्ञानकालीनप्रतिबन्धकताज्ञान एव विषयत्वान्नचैवन्तद्विषयकत्वस्य प्रतिबन्धकतातिरिक्तवृत्तित्वात्क राम
यसामान्यलक्षणाक्रान्ततापक्षवृत्तित्वविशिष्टस्य तादृशहेतोरेव विरोधत्वोपगमे पर्वतो वन्हिमान् जलादित्यादौ वह्निव्यापकीभू १५५
ताभावप्रतियोगिजलादेर्विरोधत्वानुपपत्तेः पक्षवृत्तित्वादिति वाच्यम् यद्रूपावच्छिन्नविषयकनिश्चयसामान्येऽनुमितिप्रति
बन्धकत्वपक्षधर्मताग्रहकालीनत्वोभयाभावस्तद्रूपाव॥

गा०। छिन्नो दोषइत्येवोक्तलक्षणपर्यवसितार्थइत्युपगमादिति तत्रातिव्याप्तिवारणाय प्रकृतानुमितिप्रतिबन्धकतानवच्छेदककिञ्चि
दवच्छिन्नविषयिताशून्यत्वेन तादृशनिश्चयो विशेषणीयः उक्तविशिष्टविषयकनिश्चयश्च तथाविधाधेयतात्वावच्छिन्नविषयिताशा
ल्येवेति न तत्रातिव्याप्तिः ह्रदो वह्न्यभाववानिति निश्चयस्यापि तथाविधह्रदत्वप्रकारतानिरूपितनिरवच्छिन्नविशेष्यताशालि
त्वादुक्तं किञ्चिदवच्छिन्नेति यद्यप्येवं सति एकदेशातिव्याप्तिरेकदेशविषयकस्यापि ह्रदो वह्न्यभाववानिति निश्चयस्यापि तथा

टि०। इष्टापत्तेरिति। तथा च सद्धेतूनामपि परामर्शेपि न दुष्टत्वमिति भावः अन्यथा प्रतिबन्धकीभूतभ्रमविषय

मू०। इष्टापत्तेः अन्यथा बाधस्याप्यनित्यदोषत्वापत्तेः तस्मात्तत्र वह्न्यभावव्याप्यपाषाण
मयत्ववानिति परामर्शकाले वह्निव्याप्यधूमस्याभासत्वम् भ्रमादनुमितिप्रतिबन्धमा
॥ त्रं हेतुस्तु न दुष्टः॥

त्वस्यापि दोषत्वे अनित्यदोषत्वापत्तेरिति पक्षे साध्याभावभ्रमदशायां सद्धेतावपि दो
षत्वापत्तेरित्यर्थः इत्यन्त्वयादृशविशिष्टविषयकत्वेन ज्ञानस्य प्रतिबन्धकत्वं तादृशविशिष्टस्य दोषत्वं च॥ छ॥

त्वात्तथापि निश्चये यद्रूपावच्छिन्नविषयित्वाघटितविषयिताशून्यत्वमपि निवेश्यं सापि निरसनीया एकदेशविषयकतादृशनिश्चयस्याप्र
सिद्धेः तादृशविषयितासमानाधिकरणाभावप्रतियोगितावच्छेदकत्वमेव तद्घटकमिति ध्येयम् इत्यन्त्वजातिमान् वह्न्यभाववानि
ति ज्ञानवारणायोक्तगुरुतरविशेषणमपि देयमेवेति तदीयविषयितायाः प्रतिबन्धकतानवच्छेदकत्वादेव तद्वारणसंभवादेव
त्वग्रन्थकृल्लेखनस्वरसाद्ह्रदपदेन वह्न्यभाववद्ह्रदत्वोभयोपादानेपि न क्षतिः उक्तप्रतिबन्धकज्ञानयोरेतद्विशेषणेनैव वारणा
त् न चैवमप्रमेयत्वादिविशिष्टव्यभिचारादिति व्याप्तिवारणाय तादृशविशिष्टान्तरघटितत्वनिवेशोपि नोपादेय एतदतिम-॥

का॰ सु॰ ता॰। हृ लाघवं केचित्तूक्तविशिष्टेऽतिव्याप्तिवारणाय यादृशवैशिष्ट्येति अथैवं स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशेपि स्यात्त्वभावाद
दि॰ रा॰ नतिरिक्तवृत्तित्वनिवेशनमफलमिति चेत्स्वरित्यज्यतां तदर्पितावताप्यनाहार्यत्वादिविशेषणानिवेशेन लाघवातिशयस्यैव सम्पत्तिरिति।
१५६ वस्तुतउक्तविशिष्टेऽतिव्याप्तिवारणाय स्वानन्त्येनैव प्रतिबन्धकतानवच्छेदककिञ्चिदवच्छिन्नविषयताशून्यज्ञानविषयत्वरूपं वि
शेषणमुपादेयम् एकदेशादावतिव्याप्तिवारणायाव्यापकविषयिताशून्यत्वादिविशेषितनिश्चयपदरूपावच्छिन्नविषयत्वमित्यादि।
विशेष्यदलमित्यत्रैव ग्रन्थकृत्तात्पर्यमिति दिक्। केचित्तूक्तविशिष्टेऽतिव्याप्तिवारणाय यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशवि

दि॰ हेत्वादिकमित्यादिना साध्याभावविशिष्टपक्षपरिग्रहः यादृशविशिष्टपदेन व्यभिचारत्वादिविशिष्टव्यभिचारादिक
मादाय लक्षणन्न सम्भवति व्यभिचारविषयकत्वस्य प्रतिबन्धकताशून्ये व्यभिचारवृत्तिज्ञानेवृत्तित्वेनातिरिक्तवृत्तित्वात्
किन्तु व्यभिचारादिविशिष्टं हेत्वादिकमादायैवेति व्यभिचारादिविशिष्टं हेत्वादिकमेव दोषइतिभावः ननु व्यभिचारादि

मु॰। इत्यञ्च साध्याभाववद्वृत्तिहेत्वादिकं दोषः तद्वत्त्वञ्च हेतौ येनकेनसम्बन्धेनेति नव्याः॥

विशिष्टस्य हेतोर्दोषत्वे तद्वत्त्वस्य हेतावभावाद्धेतौ दुष्टत्वव्यवहारो न स्यात् नचतादात्म्येन तद्वत्त्वं विवक्षणीयमिति वा
च्यम् तथा सति वन्ह्यभावविशिष्टह्रदादेः तादात्म्येन धूमेऽभावेन ह्रदपक्षकधूमस्य दुष्टत्वन्न स्यादत आह तद्वत्त्वञ्चेति

शिष्टविषयकनिश्चयोऽनुमितिप्रतिबन्धकतानतिरिक्तवृत्तिज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकतानादृशविशिष्टवि
षयिताद्वयशून्यप्रतीतिविषयत्वेन तादृशविशिष्टो विशेषणीयः विशिष्टद्वयविषयतायां यावत्तामनवच्छेदकत्वविशेषणात् व
न्ह्यभावविषयकनिश्चयविशिष्टवन्ह्यभाववद्ह्रदविषयकनिश्चयत्वस्यानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वेपि न वन्ह्यभाववत्साम
ह्रदादावसम्भवप्रसङ्गः इत्याहुः व्यभिचारत्वादिविशिष्टेति वह्निर्धूमस्य व्यभिचारी पक्षे साध्यस्य बाध इत्यादिव्यवहारात् साध्या १५६
भाववद्वृत्तित्वस्य व्यभिचारपदार्थत्वे साध्याभावस्यैव बाधपदार्थत्वेन प्रसिद्धतया साध्याभाववद्वृत्तित्वस्यैव प्रकृते व्यभिचारपदार्थता
बोध्या व्यभिचा॥ ६॥

वा०। यादिकमित्यादिना साध्याभावरूपबाधपरिग्रहः तादृशविशिष्टाश्रयतद्धेतुत्वस्यैवेति तथाच वन्ह्यभाववद्वृत्तिद्रव्यमिति
ज्ञानत्वस्य तद्धूमहेतुकानुमितावप्रतिबन्धकत्वान्न तादृशद्रव्यविशिष्टत्वेपि धूमस्य धूमो दुष्ट इत्यव्यवहारापत्तिरिति भावः ननु तद्धेतुक-
ति न च तद्धेतुकत्वं तत्परामर्शोत्तरत्वं तथाचोभयपरामर्शोत्तरं यत्र एकदेशे व्यभिचारज्ञानं तत्रानुमितिरुभयहेतुकत्वेन तत्र।
व्यभिचार इति वाच्यम् अव्यवहितोत्तरत्वसम्बन्धेन तद्धेतुधर्मिकव्यभिचारज्ञानविशिष्टान्यत्वस्यैव प्रकृते तद्धेतुकरूपत्वादिति
प्रकृतानुमितिप्रतिबन्धकतावच्छेदकमित्यस्य विषयविधेयेत्यादिः तथाच यादृशविषयकत्वमनुमितिप्रतिबन्धकतानतिरि-
क्तवृत्ति तादृशविशिष्टान्तराघटितत्वेनेति यादृशविषयविशिष्टविषयकत्वं तथाविधं तादृशविशिष्टो दोष इति पर्यवसितोर्थः अघ-
टितत्वस्य तद्विषयकप्रतीतिविषयत्वरूपत्वेन स्वस्मिन् स्वविषयकप्रतीतिविषयत्वाभावान्न व्यभिचार इत्यन्तरपदन्तत्त्वं न स्वभि-
त्वार्थकं व्यभिचारादेः प्रमेयत्वविशिष्टव्यभिचाराभिन्नत्वेनातिव्याप्तिवारणासम्भवात् किन्तु स्वाविषयकप्रतीतिविषयत्वं यद्य-
पि प्रमेयत्ववृत्तिप्रमेयत्वादित्यादाववृत्तित्वाभाववद्वृत्तिप्रमेयत्वरूपव्यभिचारे व्याप्तिस्तस्य वृत्तिप्रमेयत्वरूपबाधघटित-
त्वात् तथापि प्रतिबन्धकतायामेव विशिष्टान्तरविषयकत्वानवच्छिन्नत्वं देयम् व्याप्तिज्ञानप्रतिबन्धकतायां बाधविषयिता-
व्यापकत्वविरहेणोक्ताव्याप्तिविरहादिति विभावनीयम् केचित्तु स्वसजातीयविशिष्टान्तराघटितत्वानिवेशान्नोक्तदोषः बा-
धस्य हेत्वाभासविभाजकरूपेण व्यभिचारसजातीयत्वविरहान्न दोष इत्याहुस्तन्न मनोरमम् विशिष्टान्तराघटितत्वात्तद्घटित-
हेत्वाभासविभाजकरूपेणैव साजात्यं विवक्षणीयम् अन्यथा व्यभिचारविशिष्टमेयत्वादौ हेत्वाभासविभाजकरूपस्यैवाभावेना-
स्वपदेन तस्योपादातुमशक्यत्वेन विशिष्टान्तराघटितं यन्मेयत्वविशिष्टव्यभिचारादितदन्यत्वस्य प्राप्तत्वात्तत्रातिव्याप्त्यापत्तेः त-
थाच बाधोपि व्यभिचारसजातीय एव विशिष्टान्तराघटितत्वात्तद्घटितबाधत्वस्य व्यभिचारेपि सत्वादिति ध्येयम् यदि च स्वपदसा-
नुयोगिपरमेव स्वसजातीयं यद्विशिष्टान्तरं तत्तद्विषयकप्रतीतिविषयकप्रतीतिविषयत्वमेव लक्षणम् विशेष्यदलं नैवोपादेय-
म् उदासीनघटादेः स्वसजा॥

मेयत्वविशिष्टव्यभि

का॰ मु॰ रा॰। नीयप्रसिद्धेर्वक्तव्यतया अतिव्याप्तिविरहात् साजात्यमपिसम्पूर्णहेत्वाभासविभाजकरूपेणैवविवक्षणीयम् मेयत्वविशिष्टव्यभि

दि॰ रा॰ चारादौसुद्धव्यभिचारत्वस्यापिसत्वेनव्यभिचारस्यतत्सजातीयत्वसम्भवात् इत्थंचव्यभिचारविशिष्टमेयत्वस्यस्वसजातीयाप्रसिद्धे

१५३ यादृशविशिष्टविषयकज्ञानत्वेनय

दि॰। नचवन्हिव्यभिचारविशिष्टद्रव्यत्वादेर्धूमेपिसत्वादतिव्याप्तिरितिवाच्यम् यादृशविशिष्टविषयकज्ञानत्वेनय

द्धेतुकानुमितिप्रतिबन्धकत्वंतादृशविशिष्टाश्रयतद्धेतुत्वस्यैवदुष्टत्वादितिसत्प्रतिपक्षादेरनित्यदोषत्ववादिनाम्म

तमाह परेत्विति ननुवन्ह्यभावादिव्याप्तेर्यत्पदेनोपादातुंशक्यत्वेपितस्याधूमाद्वृत्तितयानधूमस्यदुष्टत्वंस्यादतआह

तद्धत्वंञ्चेति ज्ञानेनेति एकज्ञानविषयत्वेनतद्वत्वमित्यर्थः तद्वत्वस्यसाध्याभाववत्वस्य तत्रबाधकालीनधूमादि

मु॰। परेतुयद्विषयकत्वेनज्ञानस्यानुमितिविरोधित्वंतद्वत्वंहेत्वाभासत्वंसत्प्रतिपक्षेविरोधिव्या

प्त्यादिकमेवतथातद्वत्वञ्चहेतौज्ञानरूपसम्बन्धेन नचैवंवन्हिमान्धूमादित्यादौपक्षेबाधभ्रमस्यसाध्या

भावविषयकत्वेननानुमितिविरोधित्वात् ज्ञानरूपसम्बन्धेनतद्वत्वस्यापिसत्वात्सद्धेतोरपिबाधितत्वापत्ति

रितिवाच्यम्। तत्रज्ञानस्यसम्बन्धत्वाकल्पनात् अत्रसत्प्रतिपक्षितइतिव्यवहारेणतत्कल्पनात् तत्रबा

धितइतिव्यवहाराभावादित्याहुः॥ १ सद्धेताविप्यर्थः अत्रप्रतिपरामर्शकालीनेधूमादिसद्धेतौ तत्कल्पनाम्

ज्ञानस्यसम्बन्धत्वकल्पनात् ननुसद्धेतावपिबाधितइतिव्यवहारेणसम्बन्धत्वकल्पनेज्ञानस्यभविष्यतीत्यतआह

तत्रेति बाधभ्रमकालीनेसद्धेतावित्यर्थः प्रत्युतापन्नबाधितः पुरुषस्तुभ्रान्तइत्येवव्यवहारादितिभावः तादृशव्य

वहाराव्यवहारयोः स्वानुभवमात्रसाक्षिकत्वमाहुरित्यस्वरसबीजम्॥ ॥ १ रेवनातिव्याप्तिरित्युच्यतेतदा राम १५३

मूलविरोधातिरिक्तोनैतन्मतेदोषइतिध्येयम् अत्रचप्रमेयत्वविशिष्टव्यभिचारोदोषइतिव्यवहाराभावात्॥ श्री॥ श्री॥

रा०।तद्घटनप्रवेशेऽपि विशिष्टान्तराघटितत्वनिवेशेऽपि तादृशव्यवहारो दुर्निवारः तथाविधस्यैव व्यभिचारित्वस्यापि तत्र सत्त्वेन तेन रू-
पेण तस्य दोषत्वे इष्टापत्तिसम्भवात् तथाविशिष्टान्तराघटितत्वस्य लक्षणे प्रवेशे तेन रूपेणोद्देश्यतावच्छेदकधर्मबोधकत्वनियमोपग।

दि०।यथाश्रुतविरोधित्वत्यागे बीजमाह तेनेत्यादिना ननु तद्धेतुकतत्साध्यकानुमितिम्प्रति तद्धेतौ तत्साध्यव्यभिचारग्रहा
भावो हेतुर्वाच्यस्तत्राह तदभावेति नक्षतिः नाव्याप्तिः तत्र लक्षणेऽवच्छेदकत्वन्न स्वरूपसम्बन्धविशेषः पूर्वोक्त
दोषादित्यनतिरिक्तवृत्तित्वमेव निवेशनीयन्तथा च धूमवान्वह्नेरित्यादौ प्रमेयत्वविशिष्टव्यभिचारे ऽतिव्याप्तिस्तद्विषय
कत्वस्य प्रतिबन्धकतानतिरिक्तवृत्तित्वादत आह इति संक्षेप इति प्रकृतानुमितिप्रतिबन्धकतावच्छेदकान्तराघटितत्वे

मु०।अनुमितिविरोधित्वञ्चानुमितितत्कारणान्यतरविरोधित्वम् तेन व्यभिचारिणि नाव्या
प्तिः दोषज्ञानञ्च यद्धेतुविषयकन्तद्धेतुकानुमितौ प्रतिबन्धकन्तेनैकहेतौ व्यभिचारज्ञाने हेत्वन्तरेणानु
मित्युत्पत्तेः तदभावावगाहित्वाच्च व्यभिचारज्ञानस्य प्रकृतानुमितिविरोधित्वाभावेऽपि न क्षति
रिति संक्षेपः॥ ६॥ ((नानुमितिविरोधितावच्छेदकं विशेषणीयम्प्रमेयत्वविशिष्टव्यभिचारस्य प्रकृतानुमिति
प्रतिबन्धकतावच्छेदकीभूतो यो व्यभिचारस्तद्घटितत्वेनेति न तत्रातिप्रसङ्गः इति दिक् नन्वत्रानुमितितत्कारणज्ञानान्यतर
प्रतिबन्धकत्वमन्यतरनिष्ठप्रतिबध्यतानिरूपकत्वघटितं यदि तदा पर्वतो वह्निमान्धूमादित्यादौ वह्न्यभावविशिष्टह्रद
स्यापि दोषताप्रसङ्गः तस्य पर्वतो वह्निमान् ह्रदो वह्निमानिति समूहालम्बनात्मकप्रकृतानुमितिनिष्ठप्रतिबध्यता।
((निरूपितप्रतिबन्धकतावच्छेदकत्वात्॥ ६॥
मान् दोषपदस्य प्रमेयत्वविशिष्टव्यभिचारत्वस्य तथात्वान्न तादृशव्यवहारा
पत्तिरित्यवधेयम्॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

का. मु. रा० ननु तादृशान्यतरत्वव्याप्ययत्किञ्चिद्धर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकता यद्रूपावच्छिन्नविषयिता व्यापिका तद्रू
टि. ना. पावच्छिन्नो दोष इत्युक्तत्वान्न दोषः वस्तुतोऽत्रानुमितिपदस्य पक्षे साध्यव्याप्यहेतूभयविधेयकसमूहालम्बनानुमितिपरमतो न कोऽपि दो
१५८ षः तादृशानुमितित्वव्यापकप्रतिबध्यतानिवेशेन समूहालम्बनानुमितिमादाय दोषवारणासम्भवात् व्याप्तिश्चान्वयतो व्यतिरेकत
श्च निवेश्यते न साधारण्यानुपसंहारित्वयोर्नैकतरसङ्ग्रहादित्यत आह किञ्चेति मूले यादृशसाध्यकेति तद्धर्मावच्छिन्नसाध्यपक्षहे

दि० यदि च तादृशान्यतरत्वावच्छिन्नप्रतिबध्यतानिरूपकत्वघटितं तदा तादृशान्यतरत्वस्य कस्यचित्प्रतिबध्यतां न
वच्छेदकतयाऽसम्भवः तादृशान्यतरत्वव्यापकप्रतिबध्यतानिवेशे च व्यभिचारादौ बाधादौ चाव्याप्तिः व्यभिचारादेर
नुमितिविरोधितया बाधादेश्च व्याप्तिज्ञानाविरोधितया तत्प्रतिबध्यतायास्तथाविधान्यतरत्वाव्यापकत्वात् किन्त्वत
द्धर्मावच्छिन्नपक्षकतद्धर्मावच्छिन्नसाध्यकतद्धर्मावच्छिन्नहेतुकानुमिति तत्कारणज्ञानान्यतरविरोधित्वं लक्ष

मु० यादृशसाध्यपक्षहेतौ यावन्तो दोषास्तावदन्यान्यत्वं तत्र हेत्वाभासत्वम् पञ्चत्व
कथनन्तु तत्सम्भवस्थलाभिप्रायेण॥

तो निवेशनीयं अन्यथा पर्वतो वह्निमान् धूमादित्यादौ पर्वतादेः काञ्चनमयत्वाभावो हेत्वाभासस्स्यात् एवञ्च नि
र्वह्निः पर्वतो वह्निमान् धूमादित्यादौ न कोऽपि हेत्वाभासः स्यात्तादृशानुमितेरप्रसिद्धेरत आह यादृशसाध्येति तत्सम्भवेति वायु
र्गन्धवान् स्नेहादित्यादौ सर्वे हेत्वाभाससम्भव इति भावः॥ छ ॥ ९. नुक्तानुमितित्वेन किमुद्दिश्य न्यायप्रयोगो यद्ध राम
र्मावच्छिन्ने दोषव्यवहारस्सम्प्रदायसिद्धस्तावदन्यान्यत्वं तत्रत्यदोषसामान्यलक्षणमित्यर्थः तेन निर्वह्निः पर्वतो वह्निमानित्य १५८
नुमितेरप्रसिद्धावपि न क्षतिः एवं च निर्वह्निपर्वते वह्निसाधने बाधो दोष इत्यादिव्यवहारेऽपि निर्वह्निपर्वतोद्देश्यकत्ववह्निविधेयत्वप्र

रा०। ननु सादृश्यविशिष्टपिण्डदर्शनस्योपमानत्वेऽतिदेशवाक्यार्थस्मरणस्य तद्व्यापारत्वानुपपत्तिः तज्जन्यत्वे सति तज्जन्यजनका-
स्यैव व्यापारत्वात् स्मरणस्य च स्वसमानप्रकारकानुभवजन्यत्वनियमादिति मूलोक्तमतिदेशवाक्यार्थस्मरणस्य व्यापारत्वमसंगतमित्या
शङ्कां निराकुरुते सादृश्यविशिष्टेति तथा चातिदेशवाक्यार्थस्मरणस्य पूर्वेण न शाब्दबोधजन्यत्वेपि तत्रोद्बोधकविधया सदृशपिण्ड
दर्शनमपि कारणमेवेति नानुपपत्तिरिति भावः एतेनेति अतिदेशवाक्यार्थस्मरणव्यापारकसदृशपिण्डदर्शनस्यैवोपमितिक
रणत्वोपवर्णनेनेत्यर्थः बोधइति शाब्दबोधइत्यर्थः अभावादिति अनुभवात्मकातिदेशवाक्यार्थस्यैव सत्वादिति भावः नन्वेतादृ।

दि०। स्मरणं यज्जायतइति सादृश्यविशिष्टपिण्डदर्शनस्योद्बोधकविधया तादृशवाक्यार्थस्मारकत्वादिति भावः त
देव व्यापारइति एतेन सादृश्यविशिष्टपिण्डदर्शनोत्तरं यत्रातिदेशवाक्यार्थशाब्दबोधस्तत्रातिदेशवाक्यार्थस्मर
णापेक्षाभावान्नातिदेशवाक्यार्थस्मृतिव्यापारकं सादृश्यविशिष्टपिण्डदर्शनं करणं किन्तु सादृश्यज्ञानमात्रं करणं

मु०। तदनन्तरं गोसदृशो गवयपदवाच्यइत्यतिदेशवाक्यार्थस्मरणं यज्जायते तदेव व्यापारः॥

विशेषणज्ञानविधया तज्जन्यं मतिदेशवाक्यार्थज्ञानं सादृश्यविशिष्टपिण्डदर्शनञ्चोभयम्व्यापारइति कस्यचि
न्मतमप्रत्युक्तम् यत्र सादृश्यविशिष्टपिण्डदर्शनोत्तरमतिदेशवाक्यार्थे शाब्दबोधस्तत्रोपमित्यनभ्युपगमात्॥ ९

शस्थले किं कारणं को व्यापारः शाब्दबोधस्य सदृशपिण्डदर्शनाजन्यत्वेन तद्व्यापारत्वासम्भवादित्याशङ्कायामेकदेशिमतानु
सारेण व्यापारौ प्रदर्शयति किन्त्वित्यादि सादृश्यज्ञानमात्रमिति मात्रपदेन गवयत्वावच्छिन्नविशेष्यकत्वांशस्य प्रतिक्षेपः। अप्रत्यु
क्तमिति उभयोरपि विशेषणज्ञानविधया सादृश्यज्ञानजन्यत्वात् सदृशपिण्डदर्शनमतिदेशवाक्यार्थज्ञानञ्च विनोपमिते र
नुदयेन तयोरुपमितिकरणत्वाद्व विनिगमनाविरहादिति भावः एतेनेत्यनेनोक्तमर्थम्प्रकटयति यत्रेत्यादि॥ श्री०॥ श्री०॥ ९

का॰मु॰ रा०। अनभ्युपगमादिति नन्वेवन्तादृशस्थलेप्युपमितेरनुभवसिद्धतया ऽनुभवापलापप्रसङ्ग इत्यत आह किन्त्विति तदुत्तरमेवेति तथा
दि॰रा॰ च क्षणद्वयविलम्बेनोपमितिरूपपादनसम्भवान्नानुभवापलापापत्तिरिति भावः गवयो गवयपदवाच्य इतीति पिण्डे चक्षुस्संयो
१७१ गानन्तरं योग्यवृत्तितया गवयत्वजातेरपि प्रत्यक्षेण ग्रहणात्तदवच्छिन्नधर्मिकमेव गोसादृश्यज्ञानं गोपदवाच्यत्वप्रकारिकोपा
मितिरपि नानुपपन्नेति मूलाभिप्रायः यत्तु गोसदृशो गवयपदवाच्य इत्यारण्यकवाक्याज्ज्ञायमानश्शाब्दबोध एवोपमितिः नतु

दि०। किन्तु तदुत्तरमपुनः सादृश्यविशिष्टपिण्डदर्शनन्ततो ऽतिदेशवाक्यार्थस्मरणन्तदुत्तरमेवोपमितिरिति भावः गवयो गवयपदवाच्य इति ज्ञानं यज्ज्ञायत इति एतेनोपमितिर्न प्रमित्यन्तरं किन्तु शाब्दबोधात्मिकैव गोसदृशो गवय इत्यत्र सदृशपदेनोपस्थितसादृश्यावच्छेदेन गवयपदवाच्यत्वग्रहस्य गोसदृशो गवयपदवाच्य इत्याकारक।

मु०। तदनन्तरं गवयो गवयपदवाच्य इति ज्ञानं यज्ज्ञायते तदुपमितिः नत्वयं गवयपदवाच्य इत्युपमितिः गवयान्तरे शक्तिग्रहाभावप्रसङ्गात्।७९।८०।इत्युपमानखण्डम्॥ १ स्यैवोपमितिस्वरूपत्वादित्यपा

स्तम् गवयत्वावच्छेदेन गवयपदवाच्यत्वविषयिताया उपमितेर्गवयपदजन्यगवयत्वविशिष्टोपस्थितिं विना शाब्दबोधरूपत्वासम्भवादिति न च गोसादृश्यस्य गवयत्वस्य च प्रत्यक्षेणोपस्थितौ कथङ्गवयत्वावच्छेदेनैव गवयपदवाच्यत्वोपमितिर्न तु सादृश्यावच्छेदेनेति वाच्यं उपस्थितेस्सत्त्वेपि गवयत्वजात्यपेक्षया गोसादृश्यस्य गौरवज्ञानेन

॥तदवच्छेदेन गवयपदवाच्यत्वो पमितेरनुदया

प्रमित्यन्तरत्वञ्चैवं गोसादृश्यस्यैव गवयपदवाच्यतावच्छेदकत्वमुप
मितिविषयो न तु गवयत्वस्यैवेति वाच्यम्। दुष्टत्वादित्याह तन्मतन्दूषयति एतेनेति उपमितेर्गवयो गवयपदवाच्य इत्याकारकत्वेनेत्यर्थः गव राम
यत्वविशिष्टोपस्थितिं विनेति उक्तवाक्यार्थघटकगवयपदश्रवणेति तदानीं गवयत्वजातेरेव प्रत्यक्षतया तद्विशिष्टे शक्तिग्राहकप्रमाणाभा १७१
वेन च रत्या गवयपदजन्यगवयत्वावच्छिन्नोपस्थितेरसं॥

स॰॥ प्रत्येकमेवेति सकत्वलक्षणे इतरविषयतावच्छिन्नत्वनिवेशे प्रयोजनाभावादिति भावः समूहालंबनेति विशेष्ये विशेषणमिति न्यायेनानुव्यवसायोप
गमे रक्तत्वघटयोः पूर्वमुपस्थित्या तादृशानुव्यवसायसंभवादिशिष्टवैशिष्ट्यावगाहित्वेन तु पूर्वं रक्तो घट इति ज्ञानविरहात्तादृशानुव्यवसाय इति भावः
यद्यपि घटत्वप्रकारकशाब्दबोधोत्तरोत्पन्ननिर्विकल्पकस्य तादृशानुव्यवसायः संभवत्येव तथापि पूर्वं घटत्वज्ञानसत्त्वे विशिष्टप्रत्यक्षस्य सामग्रीसत्त्वा

दि॰॥ तदेव तादृशविषयतात्रयशून्यमेव निर्विकल्पकन्निर्विकल्पकस्वरूपं लक्षणान्तु प्रकारताशून्यत्वादिकमप्येकमेवेति ध्येयम् निर्वि
कल्पके मूलोक्तमतीन्द्रियत्वं साधयति तथाहीत्यादिना ज्ञानस्य प्रत्यक्षं वैशिष्ट्यानवगाहि न भवतीत्यन्वयः इति प्रत्ययादिति घ
टाद्यवगाहित्वेनैव ज्ञानप्रत्यक्षस्यानुभवसिद्धत्वादित्यर्थः तत्र घटमहं जानामीति प्रत्यये घटत्वादिविशिष्टघटादिवैशिष्ट्यभानञ्ज्ञा

मु॰॥ तदेव निर्विकल्पकन्तच्च न प्रत्यक्षम् तथाहि वैशिष्ट्यानवगाहिज्ञानस्य प्रत्यक्षन्न भवति घटमहं जानामीति प्रत्ययात्तत्र
त्रात्मनि ज्ञानम्प्रकारीभूय भासते ज्ञाने घटस्तत्र घटत्वम् प्रकारो यः स एव विशेषणमित्युच्यते विशेषणे यद्विशेषणन्तद्वि
शेषणतावच्छेदकमित्युच्यते विशेषणतावच्छेदकप्रकारकञ्ज्ञानं विशिष्टवैशिष्ट्यज्ञाने कारणन्निर्विकल्पके च घटत्वा
दिकन्न प्रकारस्तेन घटत्वादिविशिष्टघटादिवैशिष्ट्यभानं ज्ञानेन सम्भवति घटत्वाद्यप्रकारकञ्च घटादिविशिष्टज्ञानन्न स
म्भवति जात्यखण्डोपाध्यतिरिक्तपदार्थज्ञानस्य किञ्चिद्धर्मप्रकारकत्वनियमात् ॥ ११ नेन सम्भवतीति न च विशेष्ये विशे

षणमिति रीत्यैव निर्विकल्पकानुव्यवसायोस्त्विति वाच्यम् रक्तः पटो घटो द्रव्यमिति समूहालंबनानन्तरं रक्तं घटं जानामीति प्रती
त्यापत्त्या विशिष्टवैशिष्ट्यविषयताशून्यज्ञानानुव्यवसायानभ्युपगमादिति॥ ११ त्वाच्चक्षुः संयोगानन्तरं विशिष्टप्रत्यक्षमेव स्वीक्रियते न तु नि
र्विकल्पकमतस्तत्र व स्थिरचक्षुः संयोगस्थले घटविशिष्टप्रत्यक्षधारैवोपेयते न तु निर्विकल्पकान्तरितप्रत्यक्षधारेति मतव्याश्चैवमपि निर्विकल्पकस्य घ
टत्वस्य विषयोपरागेणाप्रत्यक्षं दुर्वारमेव स्वीयजातीनरसैव स्वरूपतः प्रकारत्वानभ्युप॥

मैवंजानेस्समवायेनैवस्वरूपतःप्रकारत्वाभ्युपगमादन्यथाकालोघटोज्ञा
रा॰॥ गमेननस्यज्ञानेविषयितयास्वरूपतएवप्रकारत्वसंभवादिति पड्विधइत्युक्तमिति तथाचषड्विधइत्यस्यषड्विधसाधारणप्रत्यक्षत्वाव
नंघटइत्यादिप्रत्ययापत्तेः तादृशप्रतीतेरनुभवविरुद्धत्वादितिध्येयं ॥ आत्मादाविति अत्रादिपदेनचर्ममनस्संयोगस्यज्ञानकारणत्वपक्षेनत्संग्रहः
च्छिन्नइत्येवार्थोनतुश्रावणत्वाद्यवच्छिन्नइतितदर्थइतिभावः तथापिद्रव्यसमवेतप्रत्यक्षत्वादेस्तज्जन्यतावच्छे।

दि॰॥ महत्त्वंषड्विधइति यद्यपिश्रावणादौमहत्त्वस्यहेतुत्वेप्रयोजनाभावः तथापिद्रव्यसमवेतप्रत्यक्षत्वादेस्तज्जन्यतावच्छे। ध्येयम् श्रात्मादि
दकस्यश्रावणादिसाधारण्यात् श्रावणाद्यन्यत्वनिवेशेगौरवात् प्रयोजनाभावाच्चषड्विधइत्युक्तमितिध्येयम् श्रात्मादि

मु॰॥ महत्त्वंषड्विधेहेतुः द्रव्यप्रत्यक्षेमहत्त्वंसमवायसम्बन्धेनकारणम् द्रव्यसमवेतानाङ्गुणकर्मसामान्यानांप्र
त्यक्षेस्वाश्रयसमवायसम्बन्धेनद्रव्यसमवेतसमवेतानाङ्गुणत्वकर्मत्वादीनाम्प्रत्यक्षेस्वाश्रयसमवेतसमवा
यसम्बन्धेनकारणमिति इन्द्रियङ्करणम्मतम्॥५८॥ विषयेन्द्रियसम्बन्धोव्यापारःसोपिषड्विधः अत्रापिषड्वि
धइत्यनुषज्यते इन्द्रियत्वन्नजातिः पृथिवीत्वादिनासाङ्कर्यात् किन्तुशब्देतरोद्भूतविशेषगुणानाश्रयत्वेसतिज्ञा
नकारणमनःसंयोगाश्रयत्वमिन्द्रियत्वम् आत्मादिवारणायसत्यन्तम् उद्भूतविशेषगुणस्यश्रोत्रेसत्वाच्छब्देतरे

वारणायेति आत्मादौयोऽतिव्याप्तिरूपोदोषस्तद्वारणायेत्यर्थः सत्यन्तदानेचशब्दादितरेयेउद्भूतविशेषगुणाः सुखादय
स्तदाश्रयत्वस्यैवात्मनिसत्वान्नातिव्याप्तिरितिभावः श्रोत्रेसत्वादिति तथाचतत्राव्याप्तिरितिभावः॥ ॥

अनएवेलघुभूतस्यापिश्रात्मभिन्नत्वस्यपरित्यागस्तथासति श्रात्मभिन्नेचर्मण्येवातिप्रसंगात् नवीनमतेतुशब्देतरेत्यत्रशब्दपदंज्ञानेच्छा
द्वतीनामप्युपलक्षणंवोध्यं नैरीश्वरस्यैवश्रोत्रेंद्रियत्वोपगमेनान्यथाश्रोत्रेऽव्याप्तिप्रसंगादेवंतन्मतेअनुभूतविशेषगुणपदस्समवेतभूतमेवम

॥ न्यायसिद्धान्तमुक्तावलीदिनकरीयं ॥

राम ११८

गा।।इदल्पनीयः नचात्रस्मरणमनुभवसित्थमितिभावः॥ ननुप्रथमोपस्थितज्ञानमुपेक्ष्येच्छादिव्यक्तेरितिमूलाभिधानमसंगतमित्यतआह इच्छाया।
इत्यादिज्ञानमात्रमिति यद्यपिसुषुप्तिप्राक्कालेकदाचिदिच्छादेरपिसंभवेननतदनुक्त्यामूलस्यन्यूनतापत्त्यामात्रपदमसंगतं किंतुनसुरूपवद्बुद्धीहिभ्यांज्ञा
नादिविवक्षितमित्येववक्तुमुचितंतथापिस्वप्नावस्थानंतरमेवसुषुप्तिरिति नियमेनस्वप्नदशायांचमिथ्यामनःसंयोगरूपदोषवशाद्भ्रमात्मकज्ञानमे
वोत्पद्यतेनतुविच्छादिकमन्यथास्वप्नदशायांचिकीर्षावलात्प्रवृत्तेरप्यापत्त्यागत्यादेरप्यापत्तेरितिसिद्धांतमनुसृत्यैवमभिहितमितिमंतव्यंवस्तुतो।।
ज्ञानादिव्यक्तेरित्युक्तौकेषांचिज्ज्ञानानांसिद्धांतेप्यतींद्रियतयावक्ष्यमाणस्यतस्यातींद्रियत्वइत्यादिदूषणस्यासंगत्यापत्त्यामूलकृताज्ञानमुपेक्षित

दि॥इच्छादिव्यक्तेरिति इच्छाया आदिरितिव्युत्पत्त्याज्ञानमात्रंविवक्षितम् तदतीन्द्रियत्वेज्ञानानातीन्द्रियत्वे ननुसुषुप्तिप्राक्कालीनज्ञानस्य

मु॥ मैवम् सुषुप्तिप्राक्कालोत्पन्नेच्छादिव्यक्तेस्तत्संबंधेनात्मनश्चप्रत्यक्षत्वप्रसङ्गात् तदतीन्द्रियत्वेमानाभावात् सुषुप्तिप्राक्का
लेनिर्विकल्पकमेवनियमेनजायतेइत्यत्रापिप्रमाणाभावात् अथज्ञानमात्रेत्वङ्मनः संयोगस्यहेतुत्वात्कारण
त्वनतदारासनचाक्षुषादिप्रत्यक्षकालेत्वाचप्रत्यक्षंस्यात् विषयत्वक्संयोगस्यत्वङ्मनःसंयोगस्यचसत्त्वात्.॥ ६ ॥

निर्विकल्पकरूपत्वात्तदतीन्द्रियत्वमुभयवादिसिद्धमेवेत्यतआह सुषुप्तिप्राक्कालेइतित्वङ्मनःसंयोगस्यचेति तदस्वीकारेचाक्षुषमपित

मेनदूषणस्यसविकल्पकज्ञानोपगमेपिसुगमतयातदुपेक्ष्यनिर्विकल्पकमेवजायतइत्याशंक्याग्रेमूलेनिराकरिष्यते अतएवस्वप्नावस्थायांप्रलापा
देरप्यनुभवसित्थतयातदानीमिच्छादेःप्रामाणिकत्वेपिनासंगतिरितियुक्तमुत्पश्यामः ननुसुषुप्तिप्राक्कालोत्पन्नज्ञानव्यक्तीनामतीं द्रियत्वेमानाभा
वइतिमूलोक्तमसंगतंतदानीं निर्विकल्पकस्यैवोत्पत्त्यातदतींद्रियत्वस्यसर्ववादिसिद्धत्वादित्याशंक्योत्तरग्रंथमवतारयति नन्वित्यादि तदतींद्रिय
त्वंनिर्विकल्पकातींद्रियत्वंमूले विषयत्वक्संयोगस्येत्यस्यभुज्यमानद्रव्यवाय्वादिनात्वक्संयोगस्येत्यर्थः तदस्वीकारइति त्वङ्मनस्संयोगस्वीकारइत्य
॥ र्थः तस्यादितीति ज्ञानसामान्येत्वयातस्यहेतुत्वस्वीकारादितिभावः॥

स्वप्नज्ञानभावः॥

का·मु· तएवस्पर्शसहितत्वादिति स्वीकृतत्वादित्यर्थः इष्टापत्त्यादिनेति स्पार्शनंचाक्षुषादिकालेपिभवत्येवेतीष्टापत्तेरित्यर्थः आदिनाचाक्षुषादिकंकदापिनोत्पद्यतए
टि·रा· वेनपक्षअपरिग्रहोवोध्यः ननुपुरीततिमनःप्रवेशस्यैवसुषुप्तिपदार्थतयात्वङ्मनः संयोगस्यज्ञानकारणत्वेपितदनुपपत्त्यभावात्सुषुप्त्यनुरोधेनेत्यसं
११५ गतमतआह सुषुप्ताविति नसंभवतीतिचर्ममनः संयोगस्यचाक्षुषादिकालेसत्वेपितत्रस्थितेनत्वगिंद्रियेणमनः संयोगाभावादितिभावः नव्यमतमु

दि॥ ननुचाक्षुषादिसामग्र्याः स्पार्शनप्रतिबन्धकत्वादेवनस्पार्शनंतत्रेत्यतआह परस्परेति अनुभवानुरोधादिति अनुभवस्तत्वयापिस्वह
स्तितत्वादन्यथाइष्टापत्त्यादिनात्वदुक्तापत्तेरसङ्गतत्वापातादितिभावः मिश्रमतमाह अन्येत्वित्यादिना सुषुप्त्यनुरोधेन सुषुप्तौज्ञानानुत्पाद
नुरोधेन इत्यस्यचाक्षुषादिकालेपूर्वोक्तस्पार्शनापत्तिर्नसंभवतीत्याह चाक्षुषादीति अत्रनव्याः सुषुप्त्यव्यवहितप्राक्कालेज्ञानोत्पत्तिर्यदिस्यात्त

मु॥ परस्परप्रतिबन्धादेकमपिवानस्यादिति अत्रकेचित् पूर्वोक्तयुक्त्यात्वङ्मनोयोगस्यज्ञानहेतुत्वे सिद्धेचाक्षुषा
दिसामग्र्याः स्पार्शनादिप्रतिबन्धकत्वमनुभवानुरोधात्कल्प्यतइति अन्येतुसुषुप्त्यनुरोधेनचर्ममनः संयोगस्य
ज्ञानहेतुत्वङ्कल्प्यते चाक्षुषादिप्रत्यक्षकालेत्वङ्मनः संयोगाभावान्नत्वाचप्रत्यक्षमिति॥ ॥

दातत्वक्प्रत्यक्षापत्तिभियात्वङ्मनः संयोगस्यचर्ममनः संयोगस्यवाहेतुत्वंसैवतुनयुक्तिसिद्धातथाहि सुषुप्त्यनुकूलमनःक्रियया मनसआत्म
नोविभागस्ततआत्ममनः संयोगनाशस्ततः पुरीततिरूपोत्तरदेशेनमनः संयोगरूपासुषुप्तिरुत्पद्यते एवञ्चसुषुप्त्यव्यवहितपूर्वक्षणेआ
त्ममनः संयोगरूपासमवायिकारणनाशात्ततत्क्षणेज्ञानोत्पत्तेरभावात् असमवायिकारणस्यकार्यसहभावेनहेतुत्वात्॥ ८ ॥ राम· ११५

पत्यस्यति अत्रनव्याइति तत्क्षणेसुषुप्त्यव्यवहितप्राक्क्षणे अभावादितिननुकारणस्याकार्योत्पादपूर्वक्षणएवसत्वमपेक्षितंननुकार्योत्पत्तिकालेपितथा
चज्ञानोत्पत्तिपूर्वक्षणेविभागकालेपिआत्ममनः संयोगोस्त्येवज्ञानोत्पत्तिकालएवपूर्वोत्पन्नविभागेनतस्यनाशात्ततः सुषुप्त्यव्यवहितपूर्वक्षणेपिज्ञानोत्पत्तौनवा
धकमतआह असमवायिकारणस्येति कार्यसहभावेनेति कार्यकालवृत्तित्ववैशिष्ट्येनेत्यर्थः॥

रा॰॥ यद्देवेति असमवायिकारणनाशस्यद्रव्यरूपकार्यनाशंप्रत्येवहेतुता ननुगुणादिरूपकार्यनाशंप्रत्यपीतिद्रव्यंप्रत्येवासमवायिकारण
स्य—— कार्यकालवृत्तित्वेनकारणता ननुगुणादिकंप्रत्यपीतिभावः तत्प्रत्यक्षवारणान्सुषुप्त्यव्यवहितपूर्वक्षणोत्पन्नज्ञानप्रत्यक्षवारणात्।
पुरीतदवच्छेदेनात्ममनःसंयोगेवैजात्यानंगीकारादितिभावः वैजात्येनेति यद्यप्यात्ममनःसंयोगस्यकारणताक्लृप्तेववैजात्यस्यतदवच्छेदकत्वमेवक
ल्पनीयंत्वङ्मनःसंयोगस्यतुकारणत्वेनवक्लृप्तेतिवैषम्यात्तन्नविनिगमनाविरहावकाशस्तथापिवैजात्यस्यक्लृप्तस्यकल्पनीयतत्पाक्लृप्तत्वङ्मनःसंयोगे

टि॰॥ यदिचकार्यनाशजनकनाशप्रतियोगितएवासमवायिकारणस्यकार्यसहभावेनहेतुत्वमितिमन्यते तथापिनसु
षुप्त्यव्यवहितप्राक्कालोत्पन्नज्ञानव्यक्तेःसुषुप्तिकालेप्रत्यक्षापत्तिर्भियात्वङ्मनःसंयोगादेर्हेतुत्वमिति विजातीयात्ममनः
संयोगस्यहेतुत्वेनैवतत्प्रत्यक्षवारणात् नचवैजात्यस्यात्ममनःसंयोगपुरीतदवच्छिन्नात्ममनःसंयोगव्यावृत्तत्वमेषि
तव्यमितिभावः नचवैजात्येनात्ममनःसंयोगस्यत्वङ्मनःसंयोगस्यवाहेतुत्वमित्यत्रविनिगमकाभावःत्वङ्मनःसंयो
गादेरवच्छेदकतासम्बन्धेनहेतुत्वापेक्षयासमवायेनात्ममनःसंयोगस्यहेतुत्वेलाघवात् त्वङ्मनःसंयोगस्यहेतुत्वे
चाक्षुषादिसामग्र्याःस्पार्शनप्रतिबन्धकत्वकल्पनागौरवाच्च॰ ॥ ॥

कारणतैवकल्प्यतेकल्पनीयस्योभयत्रतुल्यत्वादितिभावः त्वङ्मनस्संयोगादेरित्यादिनाचर्ममनस्संयोगपरिग्रहः अवच्छेदकतेति समवायेन
तयोरात्मन्यसत्वादितिभावः लाघवादिति अवच्छेदकतायास्तत्तदवच्छेदकस्वरूपायाःकारणतावच्छेदकसंबंधत्वेनानाव्यक्तिषुसंबंधत्वकल्पनेगौ
रवंएकस्यसमवायस्यतथात्वेलाघवादित्यर्थः त्वङ्मनस्संयोगस्यकारणतापक्षेगौरवांतरमप्याह चाक्षुषादीति॥ ॥एतेनेत्यादि वक्ष्यमाणदू
षणेनेतितदर्थः एवंचेतत्रसुषुप्तित्वाभावाच्चेतिचकारःप्रामादिकएवेतिबोध्यं नचविजातीयात्ममनःसंयोगस्यसमवायेनकारणत्वेलाघवस्यापिच
वक्ष्यमाणोपायेनेतितदर्थः इतिपाठः॥ टि॰॥१

रा॰॥कारेणसमुच्चयसंभवाच्चकारस्यप्रामादिकत्वकल्पनमसंगतमितिवाच्यंपुरीततिक्रिययासुषुप्तिस्थले पूर्वतनात्ममनस्संयोगानपायात्सुषुप्ता
वपिज्ञानोत्पादापत्त्यातद्वारणायपुरीततिमनस्संयोगस्यज्ञानंप्रतिप्रतिबंधकताकल्पनस्यावश्यकत्वेवैजात्यंकल्पयित्वाविजातीयात्ममनःसंयोगत्वेनकार
णतायामेवमानाभावात् यदिचतत्संयोगव्यक्तावपिवैजात्यंनांगीक्रियतइत्युच्यतेतदाजाग्रदवस्थायामपितदात्ममनःसंयोगव्यक्तितोज्ञानानुत्पादप्र
संगइत्यवधेयं अथपुरुषांतरीयात्मनापुरुषांतरीयमनस्संयोगात् ज्ञानोत्पत्तिवारणायपुरुषांतरीयात्ममनःसंयोगव्यावृत्तंवैजात्यंकल्पयित्वावि
जातीयात्ममनःसंयोगत्वेनज्ञानहेतुताआवश्यकीतच्चवैजात्यंसुषुप्तिकालीनात्ममनःसंयोगव्यावृत्तमपीतिकल्पनयोपपत्तौत्वङ्मनःसंयोगादेः

दि॰॥एतेनयत्रमनःक्रिययानपुरीततिसंयोगरूपासुषुप्तिःकिंतुपुरीततिक्रिययैवात्मसंयुक्तेनमनसापुरी
ततिसंयोगरूपासुषुप्तिःतत्रपूर्वोक्तापत्तिवारणायत्वङ्मनःसंयोगादेर्हेतुत्वमित्यपास्तम् पुरीततिक्रि
याजन्यमनःपुरीततिसंयोगस्यसुषुप्तित्वाभावाच्च तदानीम्मनसःसर्वविषयत्वावच्छेदेनपुरीततिसं
योगाभावेनपुरीततिबहिर्देशावच्छिन्नात्ममनःसंयोगस्यसत्वात् ज्ञानाद्युत्पत्तौबाधकाभावात् अ
तएवपदार्थत्त्वचन्द्रिकायांमनःपुरीततिमनुविशतीतिग्रन्थकाराणांलेखःसङ्गच्छतइतिवदन्ति॥ ॥

कारणत्वांतरकल्पनमयुक्तमितिचेदनधिगतभावोसि पूर्वोक्तसुषुप्तिदशायांपूर्वज्ञानोत्पत्त्यनुरोधेनक्लृप्तवैजात्यात्ममनःसंयोगसत्वेनविजाती
यात्ममनःसंयोगकारणतायावारयितुमशक्यतयासुषुप्तेरेवज्ञानप्रतिबंधकत्वस्यावश्यकत्वेवैजात्यस्यतद्भिन्नसुषुप्तिकालीनात्ममनःसंयोगव्यावृत्त
त्वकल्पनेपिबीजाभावात् तादृशसुषुप्त्यंगीकारपक्षेज्ञानसामान्येत्वङ्मनःसंयोगस्यकारणत्वमप्यप्रामाणिकमेवतथाविधसुषुप्तिसमयेमनसोनि
ष्क्रियत्वेनपूर्वमनस्त्वक्संयोगस्यापिसत्वेनतत्कारणतयापिज्ञानवारणासंभवेनअगत्यापुरीततिमनःसंयोगस्यज्ञानमात्रप्रतिबंधकत्वमेवकल्पनी
यमित्यंचत्वङ्मनःसंयोगचर्ममनःसंयोगयोःकारणतयापितदानीं ज्ञानवारणासंभवेनादिपदेनपुरीततिमनःसंयोगस्यैवज्ञानकारणतायांग्रंथका

रा॰॥ रूपत्वादिभिन्नमितीति इदमंशपूरणंनतुविवरणंतथात्वे रूपादिभिन्नमित्येवब्रूयादितिबोध्यं ननु रूपमत्रापिकारणमित्यत्रैवश्लोकसमाप्तेर्द्रव्याध्यक्षइतिद्वितीयकारिकास्थमेकंपदं किमित्यत्रैवोपात्तमित्याशंकांनिरस्यति द्रव्याध्यक्षइतीतिपुनःशंकनेइतिमूलेलाघवादित्यस्यआत्मावृत्ति ।

दि॰॥ रूपभिन्नस्यरूपत्वादेस्त्वगिन्द्रियेणाग्रहणादाह रूपत्वादिभिन्नमिति आदिनानीलत्वादिपरिग्रहः द्रव्याध्यक्षइति पूर्वान्वयीनतूत्तरान्वयीतिबोधयितुं रूपमत्रापिकारणंद्रव्याध्यक्षइत्यन्तप्रतीकधारणम् शङ्कते वहिरिन्द्रियेति ननुकार्याभावेकारणाभावस्यप्रयोजकतयागगनादौवहिरिन्द्रियजन्यप्रत्यक्षाभावे रूपाभावस्पर्शाभावयोःप्रयोजकत्वकल्पनेगौरवात्तादृशप्रत्यक्षेरूपत्वेनहेतुताङ्गीकुर्वन्ति त्वयि

मु॰॥ रूपान्यच्चक्षुषोयोग्यम् रूपभिन्नं रूपत्वादिभिन्नंयच्चक्षुषोयोग्यंतत्त्वगिन्द्रियस्यापिग्राह्यम् तथाचपृथक्त्वसंख्यादयोयेचक्षुर्ग्राह्यागुणाउक्ताः सर्वंक्रियाजातनयोयोग्यवृत्तयःत्वचोग्राह्याइत्यर्थः रूपमत्रापिकारणम्॥५६॥ द्रव्याध्यक्षे अत्रापित्वगिन्द्रियजन्येपिद्रव्यप्रत्यक्षेरूपङ्कारणम् तथाचवहिरिन्द्रियजन्यद्रव्यप्रत्यक्षेरूपङ्कारणमिति नवीनास्तुवहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रेनरूपङ्कारणम्प्रमाणाभावात् किन्तुचाक्षुषप्रत्यक्षेरूपंस्पार्शनप्रत्यक्षेस्पर्शः कारणमन्वयव्यतिरेकात्। वहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रेकिङ्कारणमितिचेन्न किञ्चिदात्मावृत्तिशब्दभिन्नविशेषगुणवत्त्वंवाप्रयोजकमस्तु रूपस्यकारणत्वेलाघवमितिचेन्न वायोस्त्वगिन्द्रियेणाग्रहणप्रसङ्गात् इष्टापत्तिरितिचेत् उद्भूतस्पर्शएवलाघवात्कारणमस्तु प्रभायाअप्रत्यक्षत्वेत्विष्टापत्तिरेवकिन्नस्यात्॥ ॥ त्वानवच्छिन्नाभावत्वेनैवतादृशप्रत्यक्षाभावेप्रयोजकत्वमुचितमित्यतआह आत्मावृत्तीति आत्मनोवहिरिन्द्रियजन्यप्रत्यक्षवारणायात्मावृत्तीति आकाशस्यवहिरिन्द्रियजन्यप्रत्यक्षवारणायशब्दभिन्नेति कालादौतद्वारणायविशेषेति शङ्कते रूपस्येति पुनःशङ्कते इष्टेति प्रतिवन्ध्योत्तरयति उद्भूतेति॰॥ ६ ॥

शब्दभिन्नविशेषगुणापेक्षयेत्यादिः रूपापेक्षयास्पर्शस्यलाघवाभावात्तथाच उद्भूतरूपत्वेनउद्भूतस्पर्शत्वेनवाकारणमित्यत्रविनिगमनाविरहत्वायोरिवप्रभायाःप्रत्यक्षाभावेइष्टापत्तिसंभवादित्यत्रैवतद्ग्रन्थतात्पर्यमितिबोध्यं॥

रा॥सनदेवसस्थयति प्रतिवंध्येति समानंविरोध्युत्तरंप्रतिवंधी ❀ उपसंहरतीति गुरुभूतस्यापिआत्माद्दति विशेषेत्यादिनापूर्वमुक्तस्यकारणत्वमेवव्यवस्थाप
का॰मु॰ यतीत्यर्थः अनुचितइति चतुरणुकादिवायोरपिस्पर्शान्यत्वाद्द्रव्यसमवेतत्वाच्चनत्रचकारणीभूतत्वक्संयुक्तस्पार्शनवत्समवायाभावात् त्र्यणुकस्यस्पार्शना
टि॰ए॰ विषयत्वादितिभावः ननुवायुगतसंख्यादिप्रत्यक्षापत्तिदोषेणैववायुप्रभयोरितिग्रंथस्यावतारितत्वेनतत्रप्रभागतसंख्याप्रत्यक्षेइष्टापत्तिरयुक्तेत्यत।
११३ आह इष्टांनार्थमितिवाधकाभावइति अत्रचयद्यपिवायोः स्पार्शनोपगमेतस्यापिस्पर्शान्यद्द्रव्यसमवेतत्वेनतत्प्रत्यक्षेकारणीभूतस्यत्वक्संयुक्तस्पार्शनवत्स
मवेतत्वस्यविरहस्यवाधकोभवति परमाणुस्तुमहत्वाभावादेवनस्पार्शनयोग्यः नचवायुचतुरणुकस्यनेष्यतएवस्पार्शनमपितुपंचाणुकादीनामेवेतिवा
दि॥उपसंहरति तस्मादिति ननुत्रुटेः स्पार्शनानङ्गीकारात्तत्स्पार्शनवारणायस्पर्शान्यद्द्रव्यसमवेतस्पार्शनमप्रतित्वक्संयुक्तस्पार्शनवद्द्रव्यसम
वायत्वेनहेतुत्वस्यवाच्यतयावायोः स्पार्शनाङ्गीकारोनोचितः अन्यथावायुगतसंख्यापरिमाणयोस्त्वचाग्रहणप्रसङ्गादित्यतआह वायुप्रभ

मु॥तस्मात्प्रभाम्पश्यामीतिवत् वायुंस्पृशामीतिप्रत्ययसंभवात् वायोरपिप्रत्यक्षत्वंसम्भवत्येववहिर्द्रव्यप्रत्यक्षमात्रेतरूपस्य
नवास्पर्शस्यहेतुत्वम् वायुप्रभयोरेकत्वङ्गृह्यतएवं क्वचिद्द्वित्वादिकमपि क्वचित्सङ्ख्यापरिमाणाद्यग्रहोदोषादित्याहुः॥५६॥

योरिति प्रभोपादानन्दृष्टान्तार्थम् गृह्यतएवेति तथाचवायुगतसंख्यादिग्रहेइष्टापत्त्यावायोःस्पार्शनाङ्गीकारेवाधकाभावइति क्वचिदितिस
जातीयसंवलनाभावइत्यर्थः आदिपदात्परिमाणपरिग्रहः तद्ग्रहश्चभूयोवयवावच्छेदेनत्वगिन्द्रियसन्निकर्षस्थलेवोध्यः॥ ❀ ॥ राम॰
त्वंचचतुरणुकस्यस्पार्शनाविषयत्वेपंचाणुकेपिकारणासंपत्तेरिदमसंगतमित्याक्षिप्यतयापिवायोःस्पार्शनमंगीकुर्वतानवीनेनद्रव्यसमवेतेत्यत्रद्रव्येत्रु ११३
टिभिन्नत्वस्यप्रकृष्टमहत्वस्यवाविशेषणतानंगीकृत्यैववायुस्पार्शनस्योपपादनीयत्वान्नासंगतिः ग्रंथकारेणचप्राचीनसम्मतकार्यकारणभावएवप्रदर्शित
स्तेनवायोःस्पार्शनानंगीकारेणद्रव्येतद्विशेषणस्यानर्थक्यत्वादितिकेचनसमादधिरे तत्तमनोरमं वायुस्पार्शनानंगीकर्त्रापिपार्थिवचतुरणुकादिस्पार्शनो
पपत्तयेद्रव्येतद्विशेषणस्योपादेयत्वात् वस्तुतःस्पार्शनत्वंचनलौकिकविषयतयास्पार्शनविशिष्टत्वंतथासत्यवयवस्पार्शनात्तुतरावयविस्पार्शनानुप
पत्तेः नापिस्पार्शनोपलक्षिततत्वंयदंकुरावयवस्यस्पार्शनमस्तित्थं तस्यस्पार्शनानुपपत्तेरतः॥

राम्। स्पार्शनयोग्यत्वमेव न ह्याद्यं तद्योग्यता च प्राचां महत्त्वे सति उद्भूतरूपस्पर्शवत्त्वं न वीनानां उद्भूतस्पर्शसहितं महत्त्वम् अतो नानुपपत्तिः इत्थं च पूर्वोक्तं वायुस्पा-
र्शनयोग्यत्वमेव न ह्याद्यं न तद्योग्यताच प्राचां महत्त्वे सति उद्भूतरूपस्पर्शवत्त्वेनवीनानां उद्भूतस्पर्शसहितंमहत्त्वमतो नानुपपत्तिः
र्शनानौचित्ये अन्यथेत्यादिनोक्तस्य वासंख्यापरिमाणप्रत्यक्षापादनस्यैव वीजतावोध्यातद्ग्रहस्येति परिमाणग्रहस्येत्यर्थः मूर्तप्रत्यक्षइति इंद्रियत्वस्पार्शनत्वे
कृतत्वाच्च हि विंद्रियजन्यत्वपरित्यागः कृतः उक्तलाघवेति मूर्तप्रत्यक्षाभावे रूपस्पर्शयोरभावद्वयस्य प्रयोजकता कल्पनमपेक्ष्य स्पर्शस्य रूपाभावस्य तथा
त्वेलाघवमित्यनेनोक्तलाघवेत्यर्थः नन्वेकस्पर्शाभावस्य तथात्वेपि लाघवानपायात् स्पर्शस्यैव कारणता लाघवान्निस्त्यनामित्यत आह यच्चोक्तमिति उप

दि॥ ननु सजातीयसंवलनदशायां भूयोऽवयवावच्छेदेन त्वगिन्द्रियसन्निकर्षाभावे च कथं त्वं वायुगतद्वित्वपरिमाणयोर्ग्रह इत्यत आह क्वचि-
त्संख्यापरिमाणेति दोषादिति सजातीयसंवलनादिरूपदोषादित्यर्थः आहुरित्यनेनास्वरससद्बीजं तु वायोः प्रत्यक्षतासन्देहेन लाघवान्मूर्तप्रत्य-
क्षतावच्छिन्नं प्रति रूपत्वेनैव कारणत्वमुचितम् न च वायुगतप्रत्यक्षतासन्देहाधीनव्यभिचारसन्देहस्य प्रतिवन्धकस्य सत्त्वात्कथं कारणताग्र

मु॰॥ त्वचो योगो मनसा ज्ञानकारणम् त्वङ्मनःसंयोगो ज्ञानसामान्ये कारणमित्यर्थः॥ ❋ ॥

ह इति वाच्यम् लाघवतर्काभावविशिष्टस्यैव व्यभिचारसन्देहस्य प्रतिवंधकतया प्रकृते पूर्वोक्तलाघवतर्कस्य सत्त्वेन तदभावविशिष्टव्यभिचा-
रसन्देहाभावस्य सत्त्वात् यच्चोक्तम् प्रभायाश्च प्रत्यक्षे निष्प्रापत्तिरित्येव किन्न स्यादिति तदपि न उपरिदेशे विहङ्गम इत्यत्र प्रभामण्डलस्यैवोप-
रिदेशतया तत्प्रत्यक्षं विनोपरिदेशे विहङ्गम इति प्रत्यक्षानुपपत्तेरित्यादिकमिति॥ ५६॥ ज्ञानसामान्ये जन्यज्ञानसामान्ये॥ रिदेशे विहंगम इतीति॥

तत्र प्रात्यक्षिकप्रतीत्यभिप्रायेण शाब्दबोधे प्रथमान्तपदोपस्थाप्यस्यैव मुख्यविशेष्यतया भाननियमेन उपरिदेशस्याप्रत्यक्षत्वेपि विहंगमांशे विशेषणतयोप-
नयसंनिकर्षेण भानसंभवादनुपपत्त्यभावात्तथा चोपरिदेशविशेष्यकविहंगमप्रकारकप्रत्यक्षस्यैवानेन शब्देनाभिलापादुपनीतविशेषणतयैव भासत इ-
ति नियमादुपरिदेशस्याप्रत्यक्षत्वे तस्य प्रत्यक्षे मुख्यविशेष्यतया भानानुपपत्तिः वा मोर प्रत्यक्षत्वे तु न काचिदनुपपत्तिरस्तीति भावः॥ ५६। ननु ज्ञानसामान्ये त्वङ्म-
नोयोगस्य कारणत्वं मूलोक्तमसंगतं नित्यज्ञाने तस्याकारणत्वादतो व्याचष्टे जन्यज्ञानेति॥

का॰ मु॰ रा॰॥ प्रमाणमितीति इदमुपलक्षणं तत्रेत्यस्याप्यनुषंगो बोध्यः आम्रस्य को रस इति प्रश्ने न रसं भूते मधुर इत्यादौ किंशब्दं विहाय प्रश्नस्य सर्वस्यैव अनुषंगदर्श
दि॰ रा॰ नादन्यथा प्रश्नवाक्यतो रसत्वावान्तरधर्मप्रकारक आम्रविशेष्यकज्ञानेच्छाया लाभेनोत्तरतो मधुरत्वप्रकारकाम्ररसविशेष्यकबोधानुत्पत्तौ तस्योत्तरत्वा
११४ नुपपत्तेरिति ध्येयं त्वगादेरिति पुरीततित्वगिन्द्रियाभावेन तत्रस्थितमनस्त्वक्संयोगासंभवादिति भावः ननु ज्ञानादेरभावादेव न मानसमिति मूले ——
——केषामित्याकांक्षाया अनिवृत्तेराह अत्रेति नन्वेवमभावादित्यत्रापि तादृशाकांक्षायाः सत्त्वात् तदनिवृत्तिस्तादवस्थ्यमत आह अभावादित्यत्रापीतिय

दि॰॥ ज्ञानाजननमिति प्रमाणमित्यनुषज्यते चक्षुरादीत्यादिना त्वगादेः परिग्रहः तदभावादेव चक्षुरादिना मनोयोगाभावादेव ज्ञानादेरभावादे
वन मानसमिति अत्र ज्ञानादेर्न मानसमित्यन्वयः अभावादित्यत्रापि ज्ञानादेरित्यस्यान्वयो बोध्यः न प्रत्यक्षमिति योग्यगुणसम्बन्धेनैवात्म॰

मु॰॥ किन्तत्र प्रमाणं सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्त्तमानेन मनसा ज्ञानाजननमिति ननु सुषुप्तिकाले किं ज्ञान
म्भविष्यति अनुभवरूपं स्मरणरूपं वा नाद्यः अनुभवसामग्र्यभावात् तथाहि प्रत्यक्षे चक्षुरादिना सह मनःसंयोगस्य हेतुत्वा
त्तदभावादेव न चाक्षुषादिप्रत्यक्षम् ज्ञानादेरभावादेव न मानसम्प्रत्यक्षं ज्ञानाद्यभावे च आत्मनोपि न प्रत्यक्षमिति व्याप्तिज्ञा
नाभावादेव नानुमितिः सादृश्यज्ञानाभावान्नोपमितिः पदज्ञानाभावान्न शाब्दबोधः इत्यनुभवसामग्र्यभावान्नानुभवः उद्बो

नो मानसप्रत्यक्षस्वीकाराद्योग्यविशेषगुणप्रत्यक्षसामग्र्यन्तर्गतस्य ज्ञानादेरभावादेव नात्मप्रत्यक्षमि ((धकाभावाच्च न स्मरणम्॥
त्यर्थः उद्बोधकाभावादिति उद्बोधकस्य फलबलकल्प्यत्वादिति भावः॥॰ ॥ (( यद्यपि न मानसमित्यस्य मानससामान्याभाव एवार्थः सं॰ राम॰ ११४
भवति मनोयोग्यस्यात्मनः सत्त्वेपि योग्यगुणसंबंधाभावादेव न तत्प्रत्यक्षस्याप्यसंभवात् तथाप्यत्रैव मानससामान्याभावोक्तावुत्तरग्रंथानुत्थितेस्तथानो
क्तमिति ध्येयं योग्यगुणेति मनोग्रहणयोग्येत्यर्थः धर्माधर्माश्रयोध्यक्षो विशेषगुणयोगत इति कारिकायामेवोक्तत्वादिति भावः ननु ज्ञानमात्रस्य समाय
मिकेष्टसाधनतास्मरणे जीवनादृष्टस्याप्युद्बोधकस्य कल्पनात्तत्रापि संबंधिज्ञानरूपोद्बोधकासंभवेप्यदृष्टविशेषस्योद्बोधकत्वसंभवादुद्बोधकाभावा
दिति मूलमसंगतमत आह उद्बोधकस्येति तथा च स्मरणस्य प्रमाणसिद्धत्वेन तदनुरोधेन कस्यचिदुद्बोधः॥

स॰॥ विशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नंप्रतिचविशेषणतावच्छेदकप्रकारकविशेषणनिश्चयत्वेनैवहेतुतयाभवतितत्राऽतिव्याप्तिरितिभावः धूमवान्प
र्वतइत्यादि आलोकादिलिंगकधूमवत्पर्वतप्रत्यक्षानुमित्यादावित्यर्थः ॥ सत्तामादायेति पर्वतोवह्निमानित्यनुमितिवृत्तिसत्ताजातिमत्त्वस्यप्रत्यक्षादावपिस
त्वादितिभावः नत्वनुभवत्वमप्यनुभवत्वव्याप्यमेवेतितमादायैवअतिव्याप्तिनादवस्थ्यमित्यतआह अनुभवत्वेति अत्रच धूमवान् पर्वतोवह्निमानित्य
नुमितावव्याप्तिवारणायैवजातिघटितलक्षणादरणमितिबोध्यं लाघवादिति व्याप्तिज्ञाननिष्ठस्वजन्यज्ञानसंबंधावच्छिन्नजनकताकत्वंव्याप्तिज्ञानक
रणकत्वंनतुव्याप्तिज्ञानजन्यज्ञानजन्यत्वेसतिव्याप्तिज्ञानजन्यत्वंव्याप्तिज्ञानकरणत्वं तेनकालोपाधिविधयाव्याप्तिज्ञानजन्यत्वमादायतत्रैवपरामर्शज

दि॰॥ तादृशेति कथितनिश्चयजन्यहेत्वविषयकेत्यर्थः सत्तामादायातिव्याप्तिरतोऽनुभवत्वव्याप्येति अनुभवत्वन्यूनवृत्तित्वन्तदर्थःतेन
नानुभवत्वजातिमादायप्रत्यक्षादावतिव्याप्तिः जातिमत्वञ्चसमवायेनविवक्षितम् तेनकालिकसम्बन्धेनजातिमतिकालेनातिव्याप्तिःप्रत्य

मु॰॥ तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्वस्यविवक्षितत्वात् अथवाव्याप्तिज्ञानकरणकंज्ञानमनुमितिः॥ ९

धर्मताया अप्रवेशेनलाघवाल्लक्षणान्तरमाह अथवेति अत्रापिसाध्यतावच्छेदकधर्मसाध्यतावच्छेदकसम्बन्धहेतुतावच्छेदकधर्महेतु
तावच्छेदकसम्बन्धानामननुगमादेकव्याप्त्युपादानेऽन्यानुमितावव्याप्तेरेकांव्याप्तिमुपादायतज्ज्ञानकरणकत्वमनुभवत्वव्याप्यजातिमत्वंवि

न्यत्वमादायचघटादिप्रत्यक्षेनातिव्याप्तिः अत्रापिलिंगाविषयकत्वनिवेशनमावश्यकं अन्यथावह्निव्याप्यधूमवत्पर्वतवान्देशइतिविशिष्टवैशिष्ट्याव
गाहिज्ञानेऽतिव्याप्तिप्रसंगात् लिंगाविषयकत्वंव्याप्यत्वावच्छिन्नप्रकारताशून्यत्वमेव तेनधूमत्वादिनाधूलीपटलादिविषयकविशेष्यावगाहिप्रत्यक्षेना
तिव्याप्तिनादवस्थ्यं नचैवमव्याप्तिस्तेनघटाद्यवगाहिविशिष्टवैशिष्ट्यप्रत्यक्षवारणासंभवइतिवाच्यं हेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपिताधिकरण
तावच्छिन्नप्रकारतानिरूपिताधेयत्वावच्छिन्नप्रकारतेत्यादिक्रमेणाधेयत्वावच्छिन्नप्रकारतापर्यन्तमुपादायतन्निरूपितसाधनतावच्छेदकावच्छिन्नप्रकारिता
शून्यत्वस्यनिवेशनीयत्वादितिभावः तज्ज्ञानकरणकवृत्तीति तद्व्याप्तिज्ञानकरणकज्ञानवृत्तीत्यर्थः॥ ९ ॥

वक्षणीयम्॥

का॰मु॰ रा॰॥ कारणत्वमिति परामर्शरूपकारणांतराभावादेव यत्किंचिज्ज्ञानात्केवलमनसो वानुमितिवारणासंभवादिति भावः अत्र च ज्ञानत्वेन कारणतापक्षे अ-
दि॰रा॰ नंतज्ञानव्यक्तीनां कारणत्वकल्पनापत्तिरपि च ज्ञानस्य समवायेन कारणत्वेपि क्षत्यभावात्परामर्शस्यापि ज्ञानत्वात्तद्रूपभूतस्वजन्यज्ञानस्य संबंधेन तस्य तथा-
१११ त्वे मानाभावाच्चेति मनस्त्वेन वेत्युक्तं ननु परामर्शातिदेशवाक्यार्थस्मरणद्वारानुमित्युपमित्योरेकमनःकरणकत्वे इंद्रियत्वव्याप्तिज्ञानत्वादिना प्रमाणविभा-
गो न स्यात् न च प्रत्यक्षकरणत्वानुमितिकरणत्वादिना एकस्यापि मनसो विभागसंभवः परस्परासंकीर्णव्याप्यधर्मकथनं विभाग इत्यत्र परस्परासंकीर्णत्व-
दि॰॥ नन्वस्त्वनुमितिम्प्रत्यपि न व्याप्तिज्ञानत्वेन करणत्वं किंतु ज्ञानत्वेन मनस्त्वेनैव वा एवमेवोपमित्यादावपि मनस्त्वेनैव करणत्वम् न च कार्य-
वैजात्यन्तस्यादिति वाच्यम् सामग्रीवैलक्षण्यादेव तदुपपत्तेः न च प्रमाणविभागानुपपत्तिः क्रियाविशेषात्तदुपपत्तेरतः पूर्वोक्तानुमित्यादिलक्षणानामस-
म्भव इत्यत आह वस्तुत इति घटेऽतिव्याप्तिवारणाय वृत्त्यन्तम् वृत्तित्वं समवायेन विवक्षितम् तेनानुमितौ कालिकेन घटत्वस्य वृत्तित्वेपि नातिव्याप्तिः

मु॰॥ एवं सादृश्यज्ञानकरणकं ज्ञानमुपमितिः पदज्ञानकरणकं ज्ञानं शाब्दबोधः वस्तुतो याङ्काञ्चिदनुमितिव्यक्तिमादाय तद्व्यक्ति-
वृत्तिप्रत्यक्षावृत्तिजातिमत्त्वमनुमितित्वम् एवं यत्किंचित्प्रत्यक्षादिकमादाय तद्व्यक्तिवृत्त्यनुमित्यवृत्तिजातिमत्त्वम् प्रत्यक्षत्वादिकम्वा

ज्ञानत्वानुभवत्वादिकमादाय प्रत्यक्षादावतिव्याप्तिवारणाय विशेष्यदलम् ननु मनसः करणतापक्षे ज्ञानाकरणकत्वम् प्रत्यक्षलक्षणम- राम॰
नुमित्यादावतिव्याप्तमनः प्रत्यक्षस्य लक्षणान्तरमाह एवमिति॥ ११ प्रत्यक्षावच्छिन्नविषयित्वव्यापकविषयितावच्छेदकत्वरूपत्वादन्यथाव्यभिचारा- १११
भिन्नविरोधाप्रसिद्ध्या हेत्वाभासविभागानुपपत्तेरिति वाच्यं मनस्त्वेनैवोभयत्र करणत्वे अनुमितित्वोपमितित्वयोरेव नियामकाभावेन कथंचिदपि विभागासं-
भवादित्याशंकते न चेति क्रियाविशेषादिति क्रियाधात्वर्थो न तु कर्म तथा च प्रत्यक्षादिप्रमारूपधात्वर्थविजातीयप्रमाभेदेनैव प्रमाणानां विभागसंभवादिति भा-
वः मनस इत्यस्यानुमित्यादावित्यादिः अतिव्याप्तमिति नित्यप्रत्यक्षेऽव्याप्तिभिया इंद्रियजन्यत्वस्य प्रत्यक्षलक्षणत्वासंभवादिति भावः प्रत्यक्षत्वमिति उपमित्यादेस्स-
र्वदा धर्मित्वेन तया प्रथमोपस्थितत्वाच्च अनुमित्यसमवेतत्वस्यैव प्रत्यक्षलक्षणघटकत्वेनोक्तिः॥ ॥

रा०॥ आदिपदग्राह्यमुपमितित्वंशाब्दत्वंचनिर्वक्ति यत्किंचिदिति शब्दभेदेनेति प्रत्यक्ष लक्षणे अनुमित्यसमवेनेति तदितरलक्षणेषु प्रत्यक्षासमवे
नेति शब्दविशेषेणेत्यर्थः प्रथमनोमूले अनुमिति लक्षणस्यैवजातिघटितस्योक्तत्वात्प्रत्यक्षादीनामित्युपेक्ष्य अनुमित्यादीनामित्युक्तं अनुभव
त्वजात्यंगीकारेणेति विशेषणज्ञानादिजन्यतावच्छेदककोटौस्मृत्यन्यत्वनिवेशगौरवापत्यात्जन्यतावच्छेदककोटिप्रवि ष्टतयैवानुभवत्व
जातिसिद्धेरितिभावः एवंचसर्वलक्षणेषुस्मृत्यसमवेनेत्युक्तौ अनुभवत्वमादायअनुमित्यादावतिव्याप्त्यापत्याएकत्रानुमित्यसमवेतत्वस्या

दि०॥ प्रत्यक्षत्वादिकमिति यत्किञ्चिदुपमितिव्यक्तिमादायतद्व्यक्तिवृत्तिप्रत्यक्षासमवेतजातिमत्वमुपमितित्वम् यत्किञ्चिच्छाब्दबो·
धव्यक्तिमादायतद्व्यक्तिवृत्तिप्रत्यक्षासमवेतजातिमत्वंशाब्दबोधत्वन्निर्वाच्यमित्यर्थः शब्दभेदेनानुमित्यादीनांलक्षणाकथनमनु
भवत्वजात्यङ्गीकारेणतदनङ्गीकारेतद्व्यक्तिसमवेतस्मरणासमवेतधर्मसमवायित्वरूपस्यलक्षणचतुष्टयस्यैकशब्देनवक्तुंश

मु०॥ जन्यप्रत्यक्षंविभजते घ्राणजादिप्रभेदेनप्रत्यक्षंषड्विधम्मतम्।५२। घ्राणजंरासनञ्चाक्षुषंस्पार्शनंश्रौत्रम्मानस
मितिषड्विधम्प्रत्यक्षम् नचेश्वरप्रत्यक्षस्याविभजनान्न्यूनत्वंजन्यप्रत्यक्षत्वस्यैवनिरूपणीयत्वात् उक्तसूत्रानुसारात्।५१।
।५२। घ्राणस्यगोचरोगन्धोगन्धत्वादिरपिस्मृतः गोचरइति ग्राह्यइत्यर्थः गन्धत्वादिरित्यादिपदात्सुरभित्वादिपरिग्रहःगन्ध
कत्वादिनिध्येयम् उक्तसूत्रेति इन्द्रियार्थसन्निकर्षोत्पन्नमित्याद्युपदर्शितसूत्रानुसारादित्यर्थः।५१। ((सप्रत्यक्षत्वात्॥ः
॥५२॥ घ्राणस्यनिर्विषयकत्वादाह ग्राह्यइति सुरभित्वादीत्यादिनाऽसुरभित्वपरिग्रहः॥ ॥

न्यत्रप्रत्यक्षासमवेतत्वस्यैवनिवेशनीयतयाशब्दभेदेनलक्षणाभिधानमावश्यकमेवेतिबोध्यं तद्व्यक्तिसमवेतेति एकशेषेणप्रत्यक्षादिव्यक्तिसमवेते
त्यर्थः ज्ञानत्वादिकमादायअन्यत्रातिव्याप्तिवारणायात्रस्मरणसमवेतेत्युक्तंसूत्रानुसारादिति सूत्राननुसारेणप्रत्यक्षसामान्यस्यलक्षणप्रदर्शनपक्षेतु।
नित्यप्रत्यक्षस्यैकत्वेनतद्विभागासंभवाज्जन्यप्रत्यक्षस्यैवविभागइतिभावः।५१।५२। ननुगोचरपदस्यविषयार्थकतयाघ्राणस्यगोचरोगंधइत्यसंगतमित्या

संगतिरिति घ्राणजसेति ग्राह्यइति तथानो ॥

रा॰॥ चरपस्य जन्यज्ञानविषयार्थकतया नासंगतिरिति भावः॥ ६॥ ५३॥ ततत्प्रत्यक्षमित्यस्य नोष्मादिप्रत्यक्षमिति नार्थः रूपे उद्भूतत्वप्रवेशेन
दिः॥ तद्वृत्तीति गन्धवृत्तीत्यर्थः॥५३॥ उद्भूतेति उद्भूतपदस्य कृत्यमाह ग्रीष्मेति ऊष्मादावित्यादिना चूर्णप्रविष्टतेजः परिग्रहः ततत्प्रत्य
क्षम् नोष्मादिगतरूपप्रत्यक्षं ॥५४॥ न्यूनतां परिहर्तुमाह पृथक्त्वादिकमपीति आलोकसंयोग इति तस्य कारणत्वमन्यका

पु॥ तद्वृत्तिजातिरपि प्रत्यक्षा गन्धाश्रयग्रहणे तु घ्राणस्यासामर्थ्यमिति बोध्यम् तयो रसो रसज्ञायास्तथा शब्दो
पि च श्रुतेः॥५३॥ रसत्वादिसहित इत्यर्थः तथा शब्दोपि शब्दत्वादिसहितः गन्धो रसश्चोद्भूतो बोध्यः॥५३॥ उद्भूतरूपञ्च
नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये विभागसंयोगपरापरत्वस्नेहो द्रवत्वम्परिमाणयुक्तम्॥५४॥ क्रिया
जातियोग्यवृत्तिः समवायश्च तादृशः ग्रीष्मोष्मादावनुद्भूतरूपमिति न तत्प्रत्यक्षम् तद्वन्ति उद्भूतरूपवन्ति॥५४॥
योग्येति पृथक्त्वादिकमपि योग्यव्यक्तिवृत्ति बोध्यम् तादृशः योग्यव्यक्तिवृत्तिः चक्षुर्योग्यत्वमेव कथं तदाह
गृह्णाति चक्षुः सम्बन्धादालोकोद्भूतरूपयोः॥ ५५॥ आलोकसंयोग उद्भूतरूपञ्च चाक्षुषप्रत्यक्षे कारणम् त
द्द्रव्यचाक्षुषं प्रति तयोः समवायसम्बंधेन कारणत्वं द्रव्यसमवेतरूपादिप्रत्यक्षे स्वाश्रयसमवायसम्बन्धेन द्र
व्यसमवेतसमवेतस्य रूपत्वादेः प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेनेति॥५५॥ उद्भूतस्पर्शवद्द्रव्यं गोचरः
सोपि च त्वचः उद्भूतस्पर्शवद्द्रव्यं त्वचो गोचरः सोपि उद्भूतस्पर्शोपि स्पर्शत्वादिसहितः॥

रे चाक्षुषापत्तिवारणायोद्भूतरूपं तु पिशाचादीनामप्रत्यक्षवारणायेत्यवधेयम् तयोः उद्भूतरूपालोकसंयोगयोः ॥ ५५ ॥९

तत्प्रत्यक्षवारणासंभवात् द्रव्याणि तद्वन्तीत्यनेनैव तत्प्रत्यक्षस्य वारणीयत्वादतो व्याचष्टे नोष्मादिगतेति॥ ५४॥ ५५॥ ९ ६ ९॥

विशिष्टेति इंद्रियार्थसंनिकर्षोत्पन्नंज्ञानमव्यपदेश्यमव्यभिचारि
ण॥ अनुव्यवसायभिन्नज्ञानमात्रस्यैवव्यवसायत्वेननिर्विकल्पकसाधनव्यवसायत्वमनअाह विशिष्टेति इंद्रियार्थसंनिकर्षोत्पन्नंज्ञानमव्यपदेश्यमव्यभिचारि
व्यवसायात्मकमितिसूत्रयोजनमाह एवंचेति नन्वीश्वरप्रत्यक्षंतुलक्ष्यमित्युक्तासूत्रेणतथैवोक्तत्वादिति मूलकारोक्तिरसंगता उक्तसूत्रेईश्वरप्रत्यक्षलक्ष्यतायाः
अनभिधानात्तदर्थमाह ईश्वरेति ननुजन्यप्रत्यक्षप्रमालक्षणेसूत्रकारोक्तावपिप्रत्यक्षप्रमासामान्यलक्षणंकिमितिशिष्यजिज्ञासयाप्रत्यक्षप्रमासामा
न्यलक्षणंवक्तव्यमेवेत्यस्वरसाल्लक्षणांतरमवतारयति ईश्वरेति अव्याप्तिरिति निर्विकल्पकस्यज्ञानाजन्यतयालक्षणस्यतत्रसत्वेनविशिष्टज्ञानलक्ष
णसमन्वयस्यावश्यकत्वात् अव्याप्तौहेतुमाह विशिष्टेति जन्येत्यादिलेनेश्वरविशिष्टज्ञानस्यविशेषणज्ञानाजन्यत्वेपिनक्षतित्यर्थकमात्रपदासंगतिः
दि॥ विशिष्टज्ञानात्मकमितियावत् एवंचसूत्रेइन्द्रियार्थसन्निकर्षोत्पन्नमव्यभिचारिअव्यपदेश्यंव्यवसायात्मकमितियोजनाबोध्या
अन्यथालक्षणवाक्येविभागबोधकपदेनव्यवधानादसङ्गतेरिति तथैवोक्तत्वादिति ईश्वरप्रत्यक्षालक्ष्यत्वस्यैवाभिप्रेतत्वादित्यर्थः ई।

मु॥ तथैवोक्तत्वात् अथवाज्ञानाकरणकंज्ञानमप्रत्यक्षम्॥ ॥

श्वरप्रत्यक्षस्यापिलक्ष्यत्वमभिप्रेत्याह अथवेति ज्ञानाकरणकमिति ज्ञानाजन्यमित्युक्तौचाव्याप्तिःविशिष्टज्ञानमात्रस्यविशे
षणाज्ञानजन्यत्वादतोज्ञानाकरणकमिति अनुमित्यादौव्याप्त्यादिज्ञानस्यकरणत्वमस्त्येवेतिनानुमित्यादावतिव्याप्तिः॥ ६॥

यत्वीश्वरज्ञानंनिर्विकल्पकमेवेतितदसत्कार्यमात्रंप्रत्यन्वयव्यतिरेकाभ्यांलोकेविशिष्टज्ञानस्यैवकारणत्वावधारणाद्विशिष्टज्ञानस्यैवेश्वरेसकर्तृ
कत्वानुमित्यासिद्धेः यदिचकार्यसामान्येकृतेरेवकारणत्वंनज्ञानेच्छयोः तयातयोरन्यथासिद्धत्वात्तयाचसकर्तृकत्वानुमानेनेश्वरेकृतेरेवसिद्धिर्नज्ञाने।
च्छयोः तच्चेवमीश्वरेज्ञानेच्छयोः कथंसिद्धिरितिवाच्यं यस्सर्वज्ञ इत्यादिश्रुत्याज्ञानस्यसऐक्षतवहुस्यामितिश्रुत्याइच्छायास्तत्रसिद्धेरीक्षणस्येच्छारू
पत्वादितिविभाव्यतेतदायथाश्रुतमेवसाधुनचैवमपिजन्यनिर्विकल्पकस्यापीश्वरज्ञानजन्यतयातत्राव्याप्तेरनुपपादनाद्ग्रंथकारस्यन्यूनतादुर्वारे
वेतिवाच्यं ज्ञानजन्येत्यस्यसमवायसंबंधावच्छिन्नजनकतानिरूपितजन्यताशून्यार्थकत्वेनिर्विकल्पकेव्याप्त्यसंभवेनतदुपेक्षणसंभवादितिध्येयं॥ ६

इदं लक्षणमीश्वरप्रत्यक्षसाधारणमित्याह अकारणकेत्यादि करणसामान्यशून्यत्वा

का॰मु॰ त्॥ अनुमित्यादौ लक्षणासत्त्वमुपपादयति अनुमित्यादाविति ॥ अनुमित्यादिज्ञानस्य कारणत्वादित्याशंकते अथेति ज्ञानत्वगर्भेति ज्ञानत्व

दि॰रा॰ देवेत्यर्थः न तु तत्त्वज्ञानात्मकप्रत्यक्षे अव्याप्तिस्तत्र निदिध्यासनव्यापारकस्य अनुमित्यादिज्ञानस्य कारणत्वादित्याशंकते अथेति ज्ञानत्वगर्भेति विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षे विशेषण

१०९ घटितेत्यर्थः कारणत्वाभावस्येत्यस्य निरूपकता संबंधेनेत्यादिः योगिप्रत्यक्षं तत्त्वज्ञानरूपं बोध्यं नन्वेवमपि विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षे विशेषण घटादिज्ञाना

तावच्छेदकप्रकारकज्ञानव्यापारकनिर्विकल्पककरणके अव्याप्तिर्दुर्वारैवेत्यस्वरसादाह अथवेति करणतानयइति परामर्शाभावादेव घटादिज्ञाना

दि॥ अकरणकत्वादेवचेश्वरज्ञानसङ्ग्रहः अथ निदिध्यासनद्वारा मननादिज्ञानकरणके योगिप्रत्यक्षे लक्षणमिदमव्यापकमि

तिचेन्न ज्ञानाकरणकपदेन ज्ञानत्वगर्भधर्मावच्छिन्नकरणकत्वाभावस्य विवक्षितत्वात् नचेदं योगिप्रत्यक्षाव्यापकम् श्रवणा

दिप्रतिपत्तीनां शाब्दत्वादिनैव जनकत्वेन विशिष्टाभावसत्त्वादिति अथवा ज्ञानकरणत्वाव्यभिचारिजातिशून्यज्ञानत्वमिह

मु॰॥ अनुमितौ व्याप्तिज्ञानस्य॰॥ ६ ॥

विवक्षितं तादृशी च जातिरनुमितित्वादिरेव एतेनानुमित्यादौ व्याप्तिज्ञानादेर्ज्ञानत्वेन करणतानयेज्ञानत्वघटितकर

णतावच्छेदकधर्माप्रसिद्ध्या सम्भवोपि प्रत्युक्त इति व्याप्तिज्ञानस्येति षष्ठ्यन्तं च तृतीयस्य करणत्वादित्यनेनान्वयः नच स्मर

णात्मकपरामर्शस्थले व्याप्तिज्ञानस्य करणत्वासम्भव इति वाच्यम् तत्र व्याप्तिज्ञानस्य संस्कारद्वारा हेतुत्वात्॥ ॥

दनुमिति वारणसंभवादिति भावः एतच्च यथाश्रुताभिप्रायेणोक्तं पर्याप्तिनिवेशसूचनायैव घटितेत्युपादानादेव ज्ञानत्वघटितत्वं ज्ञानत्वविषय रा॰म॰

कप्रतीत्यविषयत्वमात्रं न तु ज्ञानत्वभिन्नत्वमपि तत्र घटकं प्रयोजनाभावादसंभवापत्तेश्चेति विभावनीयं करणत्वासंभव इति व्याप्तिज्ञानासत्त्वेपि विशि १०९

ष्टविषयकसंस्काराद्विशिष्टविषयकस्मरणात्मकपरामर्शोत्पत्तेरिति भावः संस्कारद्वारेति तथा च व्याप्तिज्ञानस्य स्वजन्यपरामर्शसंबंधेन अनुमितौ कारण

तापरामर्शे स्वजन्यत्वं च स्वनिष्ठसमवायस्वजन्यसंस्कारान्यतरसंबंधावच्छिन्नकारणतानिरूपितकार्यतारूपं नातः प्रात्यक्षिकपरामर्शजन्यानुमितेर्व्याप्ति

रा॰ ज्ञानपदमिति अनुमितौ व्याप्तिज्ञानं कारणमित्यत्र ज्ञानपदमित्यर्थः तथाच स्मरणात्मकपरामर्शस्थापि व्याप्तिविषयकसंस्कारजन्यतया कारणत्वमक्षतमिति भावः एवंच कारणं व्याप्तिधीरिति कारिकायामपि धीपदं सविषयकपरमेवेति भावः तत्रेति स्मरणात्मकपरामर्श इत्यर्थः यद्यपि समानविषयकनिश्चयस्य संस्कारद्वारा कैश्चिदनुभवत्वेन कैश्चिज्ज्ञानत्वेन स्मरणजनकत्वं क्लृप्तमेवेति नैतदनुरोधेन तत्कल्पनीयमित्यसंगतमेवैतत् तथापि हेतुत्वकल्पनेनेत्यस्य तादृशहेतुत्वघटितलक्षणकल्पनेनेत्यर्थकतया अन्यतरसंबंधेन व्याप्तिज्ञानजन्यत्वस्य लक्षणघटकत्वमपेक्ष्य समवायेन व्याप्तिविषयकजन्यत्वस्य लक्षणघटकत्वे लाघवात्तासंगतिः अतिप्रसक्तत्वादिति अथ व्याप्तिविषयकत्वेन कारणतापक्षे व्याप्तिविषयकेच्छादावपि कारणत्वमस्त्येवेति कथमतिप्रसक्त

दि॰॥ नच ज्ञानपदस्य सविषयकपरत्वमेवास्तांम् किं व्याप्तिज्ञानस्य संस्कारद्वारा तत्र हेतुत्वकल्पनेनेति वाच्यम् इच्छादितः संस्कारा

मु॰॥ उपमितौ सादृश्यज्ञानस्य शाब्दबोधे पदज्ञानस्य स्मृतावनुभवस्य कारणत्वात्तत्र नातिव्याप्तिः ॥ ॥

द्वानुमितेरनुदयात्सविषयकत्वस्यातिप्रसक्तत्वात् सादृश्यज्ञानस्य सादृश्यप्रकारकज्ञानस्य तत्र अनुमितौ ॥ २ ६ २ ॥

ता अन्यथा अनुमित्यनुपधायकव्याप्तिज्ञानेपि व्याप्तिज्ञानत्वसत्वेन अतिप्रसक्ततया तदपि कारणतावच्छेदकं न स्यात् यदि च अनुमित्यनुपधायकेपि व्याप्तिज्ञाने स्वरूपयोग्यतारूपकारणत्वस्वीकारान्नातिप्रसक्तिरित्युच्यते तदा प्रकृतेपीदमेवोत्तरमिति मैवं कतिपयव्याप्तिज्ञानेषु कारणत्वकल्पनापेक्षया अनंतेच्छादिषु तत्कल्पनगौरवस्यैव तन्मते दूषणत्वेन प्रकृतग्रंथाभिप्रेतत्वात् तस्यैव तत्सूचनायैवेच्छांत इत्यपेक्ष्य इच्छादितः संस्कारेच्छेत्येतावत्पर्यंतमभिहितमित्यवधेयं उपमितौ सादृश्यज्ञानं करणमित्यत्र गवयादिविशेष्यकसादृश्यप्रकारकज्ञानस्य व्यापारतां भ्रमं निराकर्तुं व्याचष्टे सा

का॰मु॰ दि॰स॰ ११० स॰॥ नन्वेवं यथापारर्दौर्लभ्यं अतिदेशवाक्यार्थस्मृतेर्व्यापारत्वेन वक्ष्यमाणत्वात् तथाचेति व्याप्तिविशिष्टं व्याप्तिप्रकारकं यत्पक्षविशेष्यकं पक्षधर्मताज्ञानं हेतुतावच्छे-
दकसंसर्गावगाहि ज्ञानमित्यर्थः परामर्शजन्यसंस्कारे अतिव्याप्तिवारणाय ज्ञानपदोपादानं ननु व्याप्तिविशिष्टपक्षधर्मताज्ञानमिति चेत् तथा वह्निव्याप्यविशे-
ष्यकपर्वतादिवृत्तित्वप्रकारकज्ञानजन्यत्वं ततो लभ्यते तथाच वह्निव्याप्यधूमवानिति परामर्शजन्यानुमितावव्याप्तिरित्याशंकायामाह भवतिहीति॥
वह्निव्याप्यधूमवान्पर्वत इति ज्ञानं व्याप्तिविशिष्टपक्षधर्मताज्ञानं भवतीत्यन्वयः उक्तरीत्या व्याप्तिप्रकारकपक्षविशेष्यकहेतुतावच्छेदकसंबंधावगाहिज्ञान
स्यैव तादृशज्ञानलभ्यत्वादिति भावः नचैवमपि वह्निव्याप्यो धूमः पर्वत इति ज्ञानजन्यानुमितावतिव्याप्तिर्धूमो वह्निव्याप्यो धूमवान्पर्वत इति परामर्शानात्म

दि॥ अनुमितिं लक्षयति परामर्शेति परामर्शत्वञ्च व्याप्तिविशिष्टपक्षधर्मताज्ञानत्वम् तथाच व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञा-
नमनुमितिरिति फलितम् भवति हि वह्निव्याप्यधूमवान्पर्वत इति ज्ञानम्व्याप्तिविशिष्टपक्षधर्मताज्ञानम् तज्जन्यञ्च पर्वतो वह्निमानिति ज्ञाने-
मिति तत्र लक्षणसमन्वयः यद्यपीत्यादि प्रत्यक्षादिकमित्यादिना विशेषणानवच्छेदकप्रकारकनिश्चयविधया परामर्शजन्यस्य विशिष्ट-

मु॰॥ इदं लक्षणमीश्वरप्रत्यक्षसाधारणम् परामर्शजन्यं ज्ञानमनुमितिः यद्यपि परामर्शप्रत्यक्षादिकम्परामर्शजन्यं तथा-
पि परामर्शजन्यं हेत्वविषयकं ज्ञानमनुमितिः नच कादाचित्कहेतुविषयकानुमितावव्याप्तिरिति वाच्यम्॥ ६॥

वैशिष्ट्यबोधस्य परिग्रहः परामर्शजन्यमिति विषयविधया तत्र परामर्शस्य हेतुत्वादिति भावः कादाचित्केति धूमवान्पर्वतो वह्निमानि-
त्यनुमितौ पक्षतावच्छेदकविधया धूमस्य भानादिति भावः॥ ९ कज्ञानजन्यप्रत्यक्षादावतिव्याप्तिर्वह्निव्याप्यधूमवानिति परामर्शस्यापि कालविधया
घटादिप्रत्यक्षहेतुतया तत्रातिव्याप्तिश्चेति वाच्यम् एतद्वारणाय च हेतुतावच्छेदकसंबंधावच्छिन्नव्याप्यवच्छिन्नप्रकारतानिरूपितपक्षविशेष्यताशालिनिश्च- राम॰ ११०
यत्वावच्छिन्नजनकतानिरूपितजन्यताया एव लक्षणे निवेशनीयत्वादिति भावः अनुमितिसमानविशेष्यकतया पक्षविशेष्यकपरामर्शस्यैवानुमितिहेतुत्वा-
दिति भावः यद्यपीत्यादीति ननु प्रत्यक्षे विषयस्य सामान्यतो विषयत्वेन विशेषतश्च तत्तद्व्यक्तित्वेनैव हेतुतया लक्षणे चोक्तनिश्चयत्वावच्छिन्नजनक-
तानिरूपितजन्यताया एव विवक्षणीयतया नोक्तातिव्याप्तिरित्यत आह आदिनेत्यादि तथाचैतदक्षरसैनैव मूले आदिपदमुपात्तं॥ ९ ६ ९ ॥

रा॰॥ स्वतंत्रकर्तृत्वं कारणांतरनिरपेक्षनिष्ठकर्तृत्वं अधिष्ठानमाधारः दैवमदृष्टं कर्तृत्वं प्रतिपाद्य कारणत्वं प्रतिपाद्येत्यर्थः क्रियानुकूलकृतिमत्वरूपस्य। तस्याधिष्ठानादौ बाधात् एवं चाहमेव कर्ता इत्यत्रापि अहमेव कारणमित्येवार्थः तथा सत्येव मूढतोपपत्तिरन्यथा कारणानां बहुत्वेपि स्वस्यैव कर्तृतया अहमेव

दि॰॥ अहमेवेति तथा च तेन स्वतन्त्रकर्तृत्वाभाव एवात्मनि प्रतिपाद्यते न तु कर्तृत्वसामान्याभावः प्रकटीकृतोयमिति अधिष्ठानं तथा कर्ता करणञ्च पृथक् विधम् विविधाश्च पृथक् चेष्टा दैवञ्चैवात्र पञ्चममित्यनेन पञ्चानामपि कर्तृत्वम्प्रतिपाद्यते तत्रैवं सतीत्यादिनापि स्वतन्त्रकर्तृत्वस्यैवात्मनो निषिद्धत्वादिति भावः एवमस्तु रूपस्यैव कर्तृत्वमस्तु न च कारणत्वाभावेन कर्तृत्वाभाव एव तत्र साधनीय इति वाच्यम् स्वरूपासिद्धेः कार्यकारणयोरभेदात्कार्यनाशे कार्यरूपतया नाशे न स्यादित्यकारणत्वम्पुरुषस्येत्यपि न सत्कार्यकारणयोरभेदस्यैवा।

मु॰॥ तत्रैवं सति कर्तारमात्मानं केवलन्तु य इत्यादि वदता भगवता प्रकटीकृतोयमुपरिष्टात् आशय इति संक्षेपः धर्माधर्माश्रय आत्मेत्यनुषज्यते शरीरस्य तदाश्रयत्वे देहान्तरकृतकर्मणां देहान्तरे भोगानुपपत्तेः अध्यक्षो विशेषगुणयोगतः॥४९॥ योग्यविशेषगुणस्य ज्ञानसुखादेः सम्बन्धेनात्मनः प्रत्यक्षं सम्भवति न त्वन्यथा अहं जाने अहं करोमी। त्यादिप्रतीतेः॥४९॥ प्रवृत्त्याद्यनुमेयोयम् आत्मा परदेहादौ प्रवृत्त्यादिनानुमीयते प्रवृत्तिरत्र चेष्टा ज्ञानेच्छा प्रयत्नादीनां देहे

सिद्धत्वादित्यादि विस्तरभिया नोक्तमित्यभिप्रायवानाह संक्षेप इति इति सांख्यमतखंडनम् तदाश्रयत्वे धर्माधर्माश्रयत्वे अन्यथा। विशेषगुणासम्बंधादृते इत्यादिप्रतीतेरिति इत्यादौ ज्ञानादिसम्बन्धप्रकारेणैवात्मनः प्रत्यक्षस्यानुभवसिद्धत्वादित्यर्थः॥४९॥ परकीय। प्रवृत्त्यादेरतीन्द्रियत्वेन हेतुज्ञानासम्भवात् स्वरूपासिद्धेश्चाह प्रवृत्तिरत्रेति उक्तप्रायत्वादिति शरीरस्य न चैतन्यमित्यनेनोक्तत्वा॥ ६॥

कर्तृत्वस्य प्रमाणानापत्तिरिति ध्येयं स्वरूपासिद्धेरिति परकीयशरीरस्यैव पक्षतया तत्र प्रवृत्तिरूपहेतोरभावादिति भावः॥४९॥ दृष्टान्तासिद्धिमिति शरीरमिदं चेतनाधिष्ठितं चेष्टावत्वाद्रथवदित्यनुमाने चेतनाधिष्ठितत्वं चेतनप्रयुक्तक्रियावत्वमेव तस्य दृष्टान्तरथे सत्वेपि चेष्टारूपहेतोरभावात् शरीरक्रियायामे

का॰मु॰ रा॰॥ अर्थापत्तिरपीति पीनोदेवदत्तोदिवानभुंक्ते इतिज्ञानानंतरं पीनत्वान्यथानुपपत्त्यारात्रिभोजनंकल्पयति इयमर्थापत्तिरित्यर्थः अनुपलब्धिरितिअ
द्वि॰प॰ भावेन्द्रियसन्निकर्षाभावेनप्रत्यक्षासंभवात्तद्ग्राहार्थं प्रतियोग्युपलंभाभावस्यप्रमाणत्वंपरिकल्प्यतज्जन्यैवाभावप्रतीतिरितिभाट्टवेदांतिनश्चेत्यर्थः संभवै
१०७ दि॥ दित्यर्थः इच्छादीनामभावस्यकण्ठरवेणानुक्तेः प्रायः पदम् चेष्टायाः प्रवृत्तिज्ञापकत्वेनुकूलतर्कमाह चेष्टायाश्चेति चेष्टपेति॰
परशरीरेसमवायेनचेष्टानुमितस्यावच्छेदकतयाप्रयत्नस्यसमवायेनाश्रयश्चात्मैवेतिभावः दृष्टान्तासिद्धिमाशङ्क्यनिराकरोतियद्यपी
ति तथापीति तथाचोत्तरसंयोगप्राप्तियोग्यक्रियावत्त्वस्यैवहेतुत्वमितिभावः आत्मनोमनोमात्रजन्यज्ञानविषयत्वेहेतुमाह रूपा
द्यभावेनेति कालखात्मदिशांसर्वगतत्वम्परममहदित्यनेनात्मनिपरममहत्त्वस्योक्तेः पौनरुक्त्यमाशङ्क्याह नचेति पूर्वम्मु॰।

मु॰॥ भावस्योक्तप्रायत्वात् चेष्टायाश्चप्रयत्नसाध्यत्वाच्चेष्टयाप्रयत्नवानात्मानुमीयतइतिभावः तत्र दृष्टान्तमाह रथगत्ये
वसारथिः यद्यपिरथकर्मचेष्टानभवति तथापितेनकर्मणासारथिर्यथानुमीयतेतथाचेष्टात्मकेनकर्मणापरात्मानुमीय
तइतिभावः अहङ्कारस्याश्रयोयम् अहङ्कारोऽहमितिप्रत्ययः तस्याश्रयोविषयआत्मा नशरीरादिरिति मनोमात्रस्यगो
चरः॥५०॥ मनोभिन्नेन्द्रियजन्यप्रत्यक्षाविषयः मानसप्रत्यक्षविषयश्चेत्यर्थः रूपाद्यभावेनेन्द्रियान्तरायोग्यत्वात् विभुर्बु
द्ध्यादिगुणवान् विभुरिति विभुत्वम्परमंमहत्परिमाणवत्त्वम् तच्चपूर्वमुक्तमपिस्पष्टार्थमुक्तम् बुद्ध्यादिगुणवानिति बुद्धि गुणाः॥
काइति बुद्ध्यादिषट्कं संख्यादिपञ्चकम्भावनातथाधर्माधर्मौगुणाएतेआत्मनि स्युश्चतुर्दश इत्यनेनस (सुखदुःखेच्छादयश्चतुर्द
धर्म्यप्रकरणेकथिता इत्यर्थः॥५०॥ इतिश्रीभारद्वाजकुलोद्भववालकृष्णभट्टतनूद्भवमहादेवभट्टकृतौमुक्तावलीप्रकाशेद्वितीयःपरिच्छे
दः॥ मूलेबुद्धिस्तुद्विविधामता अनुभूतिःस्मृतिश्चस्यादित्युक्तन्तत्रानुभूतिः प्रत्यक्षात्मिकैवेतिचार्वाकाः अनुमितिरपीतिकणादसुगतौ॥
त्रिद्व्यरूपेअपीति शतमस्तीतिज्ञानानंतरंशतंपंचाशद्धृदितिमितिज्ञानात्पंचाशदस्तीतिसंभवानुभवः इहवटेयक्षस्तिष्ठतीत्यज्ञानमूलवक्तृकवाक्या॥ ज्ञायमानोऽनुभवेद्विधे नावं समनुष्यकः॥ राम
१०७

रा०॥आप्तोक्तत्वेननिश्चितशब्दस्यैवतत्करणत्वेनतदभावादितिभावः॥ नन्वनुभूतिश्चतुर्विधेतिवाङ्मात्रेणकथंन्यूनाधिकसंख्यानिरासइत्याशंक्यस्वयंयुक्ति
माह अनुमिनोमीत्यादि अभावस्यांतर्भावइति उपलब्ध्यभावस्यानुपलब्धिर्नतुप्रथमतःविशेषणतासंनिकर्षेणाभावज्ञानंप्रत्यक्षात्मकमेवेतिभावः।यथा।
दि०॥उपमितिरपीतिकेचिन्नैयायिकैकदेशिनः अर्थापत्तिरपीतिप्राभाकराः अनुपलब्धिरपीति भाट्टावेदान्तिनश्च सम्भवैतिह्यरूपेपीतिपौरा
णिकाः तत्सर्वमयुक्तमिति सूचयितुमनुभूतेश्चातुर्विध्यमाह अनुभूतिश्चतुर्विधेति अनुमिनोमिउपमिनोमिशाब्दयामीतिप्रतीतिसि
द्धानामनुमित्यादीनान्दुर्वारतयाचार्वाकाद्युदितमयुक्तम् अर्थापत्तेश्चानुमितावेवान्तर्भावोव्यतिरेकिग्रंथेव्यक्तीभविष्यति अनुपलब्धे
स्वभावस्यान्तर्भावः अन्यासाञ्च यथायथमनुमित्यादावन्तर्भावः उद्दिष्टासुप्रमासुप्रथमोपस्थितत्वात्प्रत्यक्षंलक्षयतिमुक्तावल्यामिन्द्रियजं।

मु०॥पूर्वमुक्ताःवेदितव्याः अत्रैवप्रसङ्गात्कतिपयमुद्देः प्रपञ्चन्दर्शयतिबुद्धिस्तुद्विविधामता द्वैविध्यम्प्रत्पादयति अनुभूतिःस्मृ
तिश्चस्यादनुभूतिश्चतुर्विधा।५२।प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे एतासाञ्चतसृणाङ्करणानिचत्वारिप्रत्यक्षानुमानोप
मानशब्दाःप्रमाणानीतिसूत्रोक्तानिवेदितव्यानि इन्द्रियजन्यञ्ज्ञानम्प्रत्यक्षम् यद्यपिमनोरूपेन्द्रियजन्यंसर्वमेवज्ञानन्तथापी
न्द्रियत्वेनरूपेणेन्द्रियाणांयत्रज्ञानेकरणत्वन्तत्प्रत्यक्षमितिविवक्षितम् ईश्वरप्रत्यक्षन्तुनलक्ष्यम्॥ न्यमिति इन्द्रियजन्यत्व।
मिन्द्रियरूपादावप्यस्त्यतोज्ञानमिति अनुमित्यादावतिव्याप्तिवारणायेन्द्रियजन्यमिति इन्द्रियजन्यत्वविशेषणोदत्तेप्यनु
मित्यादावतिव्याप्तिस्तदवस्थेत्याशङ्कते यद्यपीति नन्विन्द्रियजन्यत्वाभावादीश्वरप्रत्यक्षेऽव्याप्तिरतआह ईश्वरप्रत्यक्षन्त्वि
ति तथाचजन्यप्रत्यक्षमेवलक्ष्यमितिभावः॥ ॥ यद्यमिति संभवस्यानुमितावैतिह्यस्यशब्देअंतर्भावआप्तोक्तत्वसंदेहाद।
प्रामाण्यज्ञानास्कंदितःसइतिभावः इंद्रियरूपादावपीति इदंचयथाश्रुताभिप्रायेणवस्तुतोमनोरूपेंद्रियजन्यानुमित्यादावतिव्याप्तिवारणाय
इंद्रियत्वावच्छिन्नजनकतानिरूपितजन्यताविवक्षणस्यावश्यकतयाज्ञानपदंस्वरूपकीर्तनमेवेतिबोध्यं अनुमित्यादावित्यादिनोपमित्यादिपरि

का॰मु॰ रा॰॥ ननु सूत्रेऽव्यभिचारिपदवैयर्थ्यमित्याशंक्याह भ्रमेति ननूक्तलक्षणस्य प्रत्यक्षभ्रमेऽव्याप्तिरित्यत आह एतावतेति तथाच प्रत्यक्षप्रमायाल
दि॰रा॰ क्ष्यतया भ्रमस्यालक्ष्यत्वान्न तत्राव्याप्तिरिति भावः नचैवं मूलोक्तलक्षणस्य भ्रमेऽति व्याप्तिस्तस्यापि लक्ष्यत्वाभ्युपगमे च सूत्रानुसारितानस्यादि
१०८ तिवाच्यं ज्ञानपदस्य मूलस्थलक्षणे प्रमापरत्वादत एव न तद्वैयर्थ्यमिति भावः तदविषयकमितीति पदवाच्यत्वाविषयकमित्यर्थः ननु यं घ॰

दि॰॥ ननु तस्यैव लक्षणत्वे किम्मानमतआह इन्द्रियार्थेति इन्द्रियार्थसन्निकर्षोत्पन्नमित्यनेनेश्वरप्रत्यक्षमनुमित्यादिञ्च व्यावर्त्यते
भ्रमवारणायाह अव्यभिचारीति भ्रमभिन्नमित्यर्थः एतावता प्रत्यक्षप्रमाया लक्षणमुक्तम् तद्विभागमाह अव्यपदेश्यमिति
निर्विकल्पकमित्यर्थः नचाव्यपदेश्यपदेन कथन्निर्विकल्पकलाभ इति वाच्यम् व्यपदेश्यम्पदवाच्यत्वन्तदविषयकमित्या॰

मु॰॥ इन्द्रियार्थसन्निकर्षोत्पन्नम्प्रत्यक्षञ्ज्ञानमव्यपदेश्यमव्यभिचारिव्यवसायात्मकमिति सूत्रे॥ ९ ॥

र्थाद्विशिष्टज्ञाने तत्तत्पदवाच्यत्वमुपनीतम्भासत इति प्राचीनमतानुसारित्वात् अत एव कणादङ्कणादनामानं मुनिमित्या
दितत्र तत्रोक्तं सङ्गच्छते यद्वा व्यपदेशः शब्दप्रयोगः सच विशिष्टज्ञानादेवेत्यव्यपदेश्यत्वेनव्यपदेश्यानर्हत्वेन निर्विकं॰
ल्पकलाभः व्यवसायात्मकमिति विशिष्टव्यवसायात्मकमित्यर्थः ॥ ९ ॥

टइत्यादिविशिष्टज्ञानस्यापि पदवाच्यत्वाविषयकत्वान्निर्विकल्पकविभाजकधर्मस्य विशिष्टज्ञानसाधारण्यादसंगतिरित्यत आह विशि रा॰म॰
ष्टज्ञानइति तथाचायं घटपदवाच्य इत्यादिरेव विशिष्टज्ञानाकार इति भावः एतत्कल्पे व्यपदेश्यपदविषयकप्रत्ययार्थः नवीनमतमनु १०८
सृत्याह यद्वेति एतत्कल्पे तु अर्ह एव प्रत्ययार्थ इति भावः ॥ ॥

विजातीयकर्मत्वेनविजातीयसंयोगत्वेनसमवायेनहेतुहेतुमद्भावात् उभयकर्मजसंयोगादौ च तादृशवैजात्याभावेनव्यभिचाराभावात् एवमु
भयकर्मणः संयोगस्यापि च संयोगम्प्रति हेतुत्वम्बोध्यम् मूले भवेत्संयोगजोपरइति ननु संयोगजसंयोगेमानाभावः यत्रकपालक्रियया
कपालतरुसंयोगः ततः कुम्भतरुसंयोगस्तत्रकपालक्रियायाएवकुम्भतरुसंयोगम्प्रतिकारणत्वन्नतु कपालतरुसंयोगस्येति चेन्न स
मवायेनसंयोगम्प्रतिसमवायेनक्रियायाः कारणत्वात्कुम्भेसमवायेनक्रियायाअभावेनकुम्भतरुसंयोगानुपपत्तेः क्रियायाः सामानाधिकर
ण्यसम्बन्धेनहेतुत्वान्तरकल्पनापेक्षयासमवायेनसंयोगस्यैवहेतुत्वकल्पनौचित्यात् वस्तुतोयत्रकपालक्रिययाकपालान्तरेणतरुणाचैक।

एषसंयोगः ११६ सन्निपातः संयोगः द्वितीयः उभयकर्मजः तृतीयः स्यादिति पूर्वेणान्वितम् तृतीयइति संयोगजसंयो

कपालतरुसंयोगात्संयोगस्तरुकुम्भयोः ११७ तृतीयः स्यात्कर्मजोपिद्विधैवपरिकीर्तितः अभिघातोनोद
नश्चशब्दहेतुरिहादिमः ११८ शब्दाहेतुर्द्वितीयः स्याद्विभागोपित्रिधाभवेत् एककर्मोद्भवस्त्वाद्योद्वयक
र्मोद्भवोऽपरः ११९ विभागजस्तृतीयः स्यात्तृतीयोपिद्विधाभवेत् ॥ [illegible] ॥ गइत्यर्थः आदिमः अभिघातः द्विती
योनोदनाख्यः संयोगइति विभक्तप्रत्ययासाधारणकारणंविभागन्निरूपयतिविभागइति एककर्मेति॥ ६ ॥

स्मिन्क्षणेसंयोगस्तदुत्तरक्षणेघटोत्पत्तिः कपालक्रियानाशश्चनाशकस्योत्तरसंयोगस्यपूर्वंसत्त्वात् तदुत्तरक्षणेकुंभतरुसंयोगानुप
पत्तेः पूर्वक्षणेकपालक्रियायानाशात्तस्मात्कपालसंयोगएवतत्रकारणमितिसंयोगजसंयोगसिद्धिर्निराबाधैवेति अत्रकेचित्कथंसंयोग
स्यत्रैविध्यमन्यतरकर्मजन्यसंयोगस्याप्रसिद्धेः यत्रेषुक्रिययेषुवृक्षयोः संयोगस्तत्रसंयोगाधिकरणेवृक्षेक्रियाविरहेणव्यभिचारादन्य।
तरकर्मणः संयोगम्प्रतिकारणत्वस्यवक्तुमशक्यत्वादित्याहुः तन्नकार्याव्यवहितपूर्वक्षणावच्छेदेनकार्यतावच्छेदकावच्छिन्नयत्किञ्चिद्व्यक्त्य
धिकरणीभूतयावद्व्यक्तिवृत्तिकाभावप्रतियोगितानवच्छेदकधर्मवत्त्वमेवकारणं॥

त्वंशरीरक्रियाजन्य॥४॥

का॰मु॰ तावदकमेवत्त्वकार्यान्वयदिति पूर्वक्षणावच्छेदेनकार्येणानवच्छेदकावच्छिन्नयत्किञ्चिद्यन्नाधिकरणयावद्व्यक्तिषुकारणाभाववत्त्वमेवव्यभि

टि॰ भिचारः नचैवमपिवायोर्व्यभिचारः प्रकृतेद्वयोरपितादृशयावदन्तर्गततत्तयातत्रक्रियाभावासत्त्वादितिदिक् नन्वेवंयत्र हस्तक्रियातत्तो द्वितीयक्ष

२०७ णेशरीरक्रियातत्र चतुर्थक्षणेहस्ततरुसंयोगस्तस्मिन्नेवक्षणेशरीरक्रियाजन्यशरीरपूर्वदेशसंयोगनाशस्तदुत्तरक्षणेशरीरतरुसंयोगो

जायतेतस्यचहस्ततरुसंयोगजन्यत्वंवेत्यत्र विनिगमनाविरहः नचोभयमेवतत्रहेतुः जातिसङ्करप्रसङ्गादितिचेन्न तत्रसंयोगद्वयस्यैवो

पगमात् द्वित्वाग्रहस्तुसादृश्यदोषादित्येके तत्रचित्रसंयोगस्यैवोत्पद्यते कारणत्वन्तुतत्रसंयोगकर्मोभयत्वेनेतिचित्रसंयोगोविजातीयएव

तदुदाहरणान्तुश्येनशैलविभागादिकम्पूर्ववद्बोध्यम् तृतीयोपिविभागजः विभागः कारणमात्रविभागजन्यः कारणाका

रणविभागजन्यश्चेति द्विविधः आद्यस्तावत् यत्रैककपालेकर्मततः कपालद्वयविभागः ततोघटारम्भकसंयोगनाश

स्ततोघटनाशः ततस्तेनैवकपालविभागेनसकर्मणः कपालस्याकाशविभागोजन्यते ततआकाशसंयोगनाशः ततउ

॥ हेतुमात्रविभागोत्थोहेत्वहेतुविभागजः॥१२०॥

त्तरदेशसंयोगः ततःकर्मनाशइति नचतेनकर्मणैवकथन्देशान्तरविभागोनजन्यतइतिवाच्यम् एकस्यकर्मण

आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्यानारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्यचविरोधात्॥ ६ ॥

वेतिनसाङ्कर्यमित्यपरइत्यन्यत्रविस्तरः पूर्ववदितिसंयोगवदित्यर्थः तेनैवकपालविभागेनेति तेनकपालविभागेनैवेत्यर्थः एवकारेणकर्म

णोव्युदासः कपालस्याकाशविभागोजन्यतइति अन्यथाकपालाकाशसंयोगस्यनाशकाभावेननित्यत्वापत्तिरेवकपालाकाशसंयोगस्यप्रति राम

बन्धकस्यसत्वेनोत्तरसंयोगानुत्पत्त्याकर्मणोपिनित्यत्वापत्तिः। उत्तरसंयोगस्यैवस्वजनककर्मनिवर्तकत्वादितिभावः असुमर्थंहृदिनिधायो २०१

क्तम् ततउत्तरदेशसंयोगस्ततः कर्मनाशइति तेनकर्मणैवेति कपालद्वयविभागजनककर्मणैवेत्यर्थः देशान्तरविभागःकपालाकाशादिविभागः

आरम्भकसंयोगः कपालद्वयसंयोगादिस्तत्प्रतिद्वन्द्वितद्विरोधीतन्नाशक इतियावत् एवमग्रेपि अनारम्भकसंयोगः कपालाकाशसंयोगादिः॥६॥
अन्यथेति आरम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्मणोऽनारम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्मणश्चैक्य इत्यर्थः विकसदिति तत्राग्रावच्छे
देनारम्भकसंयोगप्रतिद्वन्द्विविभागजनककर्मणः सत्वात्तेन कर्मणा मूलावच्छिन्नारम्भकसंयोगविरोधिविभागोत्पत्तिस्तेनचारम्भकसंयोगनाशस्ते
न कमलनाशः स्यादितिभावः कारणविभागेनैवकारणमात्रविभागेनैव कपालद्वयविभागादिनेतियावत् पूर्वं घटाद्यात्मकद्रव्यनाशात्पूर्वं तथाच
पूर्वोक्तं ततोघटनाशस्ततःकपालस्याकाशविभागोजन्यतइत्यसङ्गतमितिभावः। सतिद्रव्येद्रव्यनाशंविनादेशान्तरविभागासम्भवादिति अन्यथा

अन्यथाविकसत्कमलकुड्मलभङ्गप्रसङ्गात् तस्माद्यदीदमनारम्भकसंयोगप्रतिद्वन्द्विविभागञ्जनयेत् तदारम्भकसंयो
गप्रतिद्वन्द्विविभागन्नजनयेत् नचकारणविभागेनैवद्रव्यनाशात्पूर्वं कुतोदेशान्तरविभागोनजन्यतइतिवाच्यम् आ
रम्भकसंयोगप्रतिद्वन्द्विविभागवतोऽवयवस्यसतिद्रव्येदेशान्तरविभागासम्भवात् द्वितीयस्तावत् यत्रहस्तक्रिया
याहस्ततरुविभागस्ततःशरीरेपिविभक्तप्रत्ययोभवति तत्रशरीरतरुविभागेहस्तक्रियानकारणम्व्यधिकरणत्वा
त् शरीरेतुक्रियानास्त्येव अवयविकर्मणोयावदवयवकर्मनियतत्वात् अतस्तत्रकारणाकारणविभागेनका
र्यो कार्यविभागोजन्यतइति अतएवविभागोगुणान्तरम् अन्यथाशरीरेविभक्तप्रत्ययोनस्यात्॥ ९ कारणमात्रविभा
गेकर्मलक्षणस्यातिव्याप्त्यापत्तेरितिभावः वस्तुतःकर्मलक्षणस्यतत्रनातिव्याप्तिः तत्प्रकारस्तुपाकजप्रक्रियायांसप्रपञ्चम्प्रदर्शितोऽस्माभिः
द्वितीयइति कारणाकारणविभागजन्यइत्यर्थः यावदवयविकर्मनियतत्वादितिक्रियायाव्याप्यवृत्तित्वनियमादितिभावः अतएववक्ष्यमाणयुक्तेरेव
शरीरेविभक्तप्रत्ययोनस्यादिति यत्रहस्तक्रिययाहस्ततरुविभागस्तत्रशरीरेविभागप्रत्ययः सर्वानुभवसिद्धः सचविभागंविनानोपपद्यते न मु
चशरीरतरुसंयोगनाशएवतद्विषयइतिवाच्यम् विभागानङ्गीकारेशरीरतरुसंयोगनाशस्यैवासम्भवात् नहितत्रहस्तक्रियाशरीरतरुसं
योगनाशिकाव्यधिकरणत्वात् नस्तत्रहस्ततरुविभागेनशरीरतरुविभागोजन्यते तेनचशरीरतरुसंयोगनाशोजन्यतइत्युपेयतइतिविभाग

का॰ मु॰ टि॰ २०८

ननु हस्ततरुसंयोगनाश एव शरीरतरुसंयोगनाशकोस्तु तयोरुभयत्सामानाधिकरण्यसत्वात् मास्तु विभागजविभागो हस्ततरुविभागस्तु कर्मज न्य शरीरतरुसंयोगनाशकतयाभिध्यतीत्यप्यत एवापास्तम् हस्ततरुसंयोगनाशेनैव तदुपपत्तेः किञ्च हस्तक्रियैव स्वसमवायिसमवेतत्वसम्बन्धे न शरीरनिष्ठाशरीरतरुसंयोगनाशे हेतुरस्तु वैयधिकरण्याभावादिति चेन्न आश्रयनाशाजन्यगुणनाशस्य विरोधिगुणजन्यत्व नियमेन शरीर कर्मजन्यशरीरतरुसंयोगस्य निहस्ततरुसंयोगस्याकारणत्वेन च शरीरतरुसंयोगनाशे हस्ततरुसंयोगनाशस्याजनकत्वात् यच्चोक्तं हस्तक्रियैव स्वसम वायिसमवेतत्वसम्बंधेन तत्र कारणमिति तदपि न साक्षात्सम्बन्धेन जनकत्वनियमस्य मानिबाधकेन सङ्कोचकस्य चानुपपत्तेः वस्तुतस्तु संयोग

अतः संयोगनाशेन विभागो नान्यथा सिद्धो भवति ११६।११७।११८।११९।१२०॥ परापरव्यवहारनिमित्ते परत्वापरत्वे निरूप यति परत्वं चेति दैशिकमिति दैशिकपरत्वम् बहुतरमूर्तसंयोगान्तरितत्वज्ञानादुत्पद्यते एवं तदल्पीयस्त्वज्ञानादपरत्वमुत्प

परत्वं चापरत्वं च द्विविधं परिकीर्तितम् दैशिकं कालिकं चापि मूर्त एव तु दैशिकम्।१२१।परत्वं मूर्त संयोगभूयस्त्वज्ञानतो भवेत् अपरत्वं तदल्पत्वबुद्धितः स्यादितीरितम् १२२ तयोरसमवायी तु दिक्संयोग स्तदाश्रये दिवाकरपरिस्पन्दभूयस्त्वज्ञानतो भवेत्१२३ द्यते अत्रावधित्वार्थं पञ्चम्यपेक्षा यथा पाटलिपुत्रात् काशीमपेक्ष्य प्रयागः परः पाटलिपुत्रात् कुरुक्षेत्रमपेक्ष्य प्रयागोऽपर इति १२१।१२२। तयोर्दैशिकपरत्वापरत्वयोरसमवा यी असमवायिकारणम् तदाश्रये दैशिकपरत्वापरत्वाश्रये। दिवाकरेति॥ ९ भावो विभागो विभागाभावो वा संयोग इत्यत्र विनि।

गमना विरहेणोभयोरव्यतिरिक्तत्वम् अत एव घटात्पटो विभक्त इति प्रत्ययमुपपद्यते संयोगस्य नाशात्मकत्वेनाशस्य सावधिकत्वाभावेन तथाप्रत्ययानुप पत्तेरिति तदिदमभिप्रेत्योक्तमतः संयोगेत्यादि मूले मूर्त एव तु दैशिकमिति विभुद्रव्ये विप्रकृष्टदेशमात्रवृत्तित्वसन्निकृष्टदेशमात्रवृत्तित्वबुद्धेर्निमित्त कारणस्य दिक्संयोगस्यासमवायिकारणस्य चाभावादिति भावः दैशिकपरत्वस्य निमित्तकारणमाह बहुतरेति बहुतरसंयोगान्तरितत्वं तदेव विप्र कृष्टत्वं तद्विषयिण्यपेक्षाबुद्धिर्दैशिकपरत्वस्य निमित्तकारणमित्यर्थः तदल्पीयस्त्वेति अल्पसंयोगान्तरितत्वरूपसन्निकृष्टत्वविषयिण्यपेक्षाबुद्धिर्दै २०८

कार्यकारणमितिमितिकारणामिति भिष्कृः॥

कालिकपरत्वापरत्वे जन्येष्वेवेत्यत्र जन्यपदं सप्तम्यन्तं नित्ये तत्पूर्वोत्पन्नत्वरूपज्येष्ठत्वबुद्धेस्तदनन्तरोत्पन्नत्वरूपकनिष्ठत्वबुद्धेर्निमित्तकारण
स्य कालसंयोगरूपासमवायिकारणस्य चाभावादिति भावः मूलेऽपेक्षाबुद्धिनाशेनेति स्वनिमित्तकारणविप्रकृष्टत्वादिबुद्धीनान्नाशेनेत्यर्थः नव्याः
पुनर्बहुतरसंयोगान्तरितत्वरूपविप्रकृष्टत्वाल्पसंयोगान्तरितत्वरूपसन्निकृष्टत्वाभ्यां दैशिकपरत्वादिव्यवहारस्य बहुतरस्पन्दान्तरितजन्य।

अत्र परत्वापरत्वद्वं कालिकद्वं ग्राह्यम् यस्य सूर्यपरिस्पन्दापेक्षया यस्य सूर्यपरिस्पन्दोऽधिकः स ज्येष्ठः यस्य न्यूनः स कनिष्ठः
कालिकपरत्वापरत्वे जन्यद्रव्ये एव अत्र कालिकपरत्वापरत्वयोः १२३।१२४। तेषाम् कालिकदैशिकपरत्वापरत्वानाम् क्रम
प्राप्तामबुद्धिन्निरूपयति बुद्धेरिति तत्र अप्रमान्निरूपयति तच्छून्यइति तदभाववति तत्प्रकारकज्ञानमप्रमइत्यर्थः तत्प्रपञ्चः

परत्वमपरत्वन्तु तदीयाल्पत्वबुद्धितः अत्र त्वसमवायी स्यात्संयोगः कालपिण्डयोः १२४ अपेक्षाबुद्धिनाशेन
नाशस्तेषान्निरूपितः। बुद्धेः प्रपञ्चः प्रागेव प्रायशो विनिरूपितः १२५ अथावशिष्टोऽप्यपरः प्रकारः परिदर्श्यते
। अप्रमा च प्रमा चेति ज्ञानन्द्विविधमिष्यते १२६ तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता। तत्प्रपञ्चो विप
र्यासः संशयोऽपि प्रकीर्तितः १२७ आद्यो देहेष्वात्मबुद्धिः शङ्खादौ पीततामतिः। भवेन्निश्चयरूपा या संश
योऽथ प्रदर्श्यते १२८ किं स्विन्नरो वा स्थाणुर्वेत्यादिबुद्धिस्तु संशयः। तदभावाप्रकाराधीस्तत्प्रकारा तु निश्चयः॥

अप्रमाप्रपञ्चः १२५।१२६।१२७ आद्यइति विपर्यासइत्यर्थः। शरीरादौ निश्चयरूपं यदात्मत्वप्रकारकज्ञानं गौरोऽहमित्याका
रकम् एवं शङ्खादौ पीतः शङ्खइत्याकारकं यज्ज्ञानन्निश्चयरूपन्तद्भ्रमइति किंस्विदिति वितर्के निश्चयलक्षणमाह तद

त्वरूपज्येष्ठत्वाल्पतरस्पन्दान्तरितजन्यत्वरूपकनिष्ठत्वाभ्याञ्च कालिकपरत्वादिव्यवहारस्योपपन्नेर्नेतयोर्गुणान्तरत्वम् अत्र च यत्काले ज्ये
ष्ठत्वबुद्धिरुत्पद्यते तत्कालमादाय स्पन्दनन्यूनाधिकतावसेया अतो न कनिष्ठेऽधिकजीविनि परत्वव्यवहारापत्तिरिति वदन्ति तदभाववतीति
॥ इदञ्च प्रमायामतिव्याप्तिवारणाय तदभाववद्विशेष्यकतदभावप्रकारकप्रमाया ॥

का॰ मु॰ मतिव्याप्तिवारणाय तत्प्रकारकमिति इच्छायामतिव्याप्तिवारणाय ज्ञानमिति ॥ ६ ॥ तदभावाप्रकारकमिति संशयेऽतिव्याप्तिवारणाय अत्र च त
टि॰ द्विशेष्यकत्वावच्छिन्नतदभावप्रकारताशून्यतद्विशेष्यकतावच्छिन्नतत्प्रकारकत्ववज्ज्ञानत्वं यत्र तत्र तन्निश्चयत्वमवसेयन्तु यथाश्रुतम् महान
२०९ सोयं वह्निमान्न वा पर्वतो वह्निमानित्यस्य पर्वते वह्निनिश्चयत्वानापत्तेः । ज्ञानपदञ्चेच्छायामतिव्याप्तिवारणाय एकधर्मिकेति ह्रदः पर्वतो वह्निन ।
दभाववन्तौ वेति ज्ञानेऽतिव्याप्तिवारणायैकधर्मिकेति एकधर्मितावच्छेदकविशिष्टविशेष्यकत्वावच्छिन्नेत्यर्थः तेन पर्वतो वह्निमान् द्रव्यं वह्न्य
भाववदिति ज्ञानमुदासः वृक्षः संयोगवान्तदभाववांश्चेति समुच्चयवारणाय विरुद्धेति विरोधावगाहित्वन्तदर्थः । घटो द्रव्यम्पृथिवी चेति ज्ञानवारणाय ।
भावाभावेति इच्छामुदासार्थं विशेष्यभागः वस्तुतस्तु एकधर्मावच्छिन्नविशेष्यकत्वनिवेशो विभिन्नरूपेणैकधर्मितावच्छेदककज्ञानस्य ।

तदभावाप्रकारकन्तत्प्रकारकञ्ज्ञानन्निश्चयः १२८ । १२९ संशयं लक्ष[illegible]यति स संशय इति एकधर्मिकविरुद्धभावाभाव
प्रकारकञ्ज्ञानं संशय इत्यर्थः । साधारणेति उभयसाधारणो यो धर्मस्तज्ज्ञानं संशयकारणं यथा उच्चैस्तरत्वं स्थाणुपुरुषसा ।

स संशयो मतिर्या स्यादेकत्राभावभावयोः । साधारणादिधर्मस्य ज्ञानं संशयकारणम् । १३० ॥

धारणञ्ज्ञात्वा ऽयं स्थाणुर्न वा इति संदिग्धे एवमसाधारणधर्मज्ञानं संशयकारणम् यथा शब्दत्वन्नित्यानित्यव्यावृत्तं शब्दे
गृहीत्वा शब्दो नित्यो न वेति सन्दिग्धे ॥ ७ ॥ ९ संशयत्वापत्तिः एकधर्मावच्छिन्नविशेष्यतावच्छेदकताकत्वनिवेशे च निरवच्छि
न्नविशेष्यतावच्छेदकतासंग्रहासंग्रहप्रसङ्गः विभिन्नरूपेण धर्मितावच्छेदकतावच्छेदकावगाहिज्ञानस्य संशयत्वप्रसंगश्चेति स्वीयैककोटि
प्रकारतावच्छिन्नप्रतिबध्यतानिरूपित प्रतिबन्धकतावच्छेदकीभूता ऽपरकोटिप्रकारताशालिज्ञानत्वं संशयत्वमिति ध्येयम् यत्तु संशय ।
त्वं जातिविशेष इति तन्न चाक्षुषत्वादिना सङ्करप्रसङ्गात् संदिग्ध इति किञ्चिदिदम् सन्देहवान् भवतीत्यर्थः एवमग्रेऽपि समानानेकधर्मोपप
त्तेर्विप्रतिपत्तेरित्यादिसूत्रे विप्रतिपत्तिवाक्यजन्यशाब्दसंशयस्योक्तत्वात् साधारणधर्मासाधारणधर्मज्ञानजन्यसंशयवद्विप्रतिपत्तिवाक्य
जन्यस्तृतीयोऽपि संशय इति मतन्निरासायाह ॥

विप्रतिपत्तिस्त्विति व्याप्तिज्ञानादीनामित्यादिनातिदेशवाक्यार्थज्ञानपरिग्रहः। ननु तर्हि सूत्रस्थपञ्चम्यनुपपत्तिरित्यत आह किन्त्विति तथा च सूत्रस्य पञ्चमी प्रयोजकतायामिति भावः। एवञ्ज्ञाने प्रामाण्यसंशयाद्विषयसंशय इत्यत्र प्रामाण्यपदमप्रामाण्यस्याप्युपलक्षकं तेन प्रामाण्यसंशयस्याप्रामाण्यस्य च विषयसन्देहे स्वातन्त्र्येण हेतुत्वमिति भावः। एवं व्याप्येति अथ व्याप्यसंशयस्य व्यापकसंशयहेतुत्वे किम्मानं कोटिस्मरणादित एव तत्सम्भवात् क्वचित्तत्तदनुविधानस्य तु व्याप्यतदभावयोर्व्यापकतदभावसाहचर्यस्यगृहीतत्वेन तत्स्मरण एवोपक्षीणत्वात् तदग्रहे तु व्याप्यसंशयाद्व्यापकसंशयस्याप्यभावादिति चेदत्राहुः महानसे द्रुताग्नौ न जलह्रद इति स्मरताम्पर्वतादिकमपि पश्यतान्धूमादिसंशयाभावाभावाभ्यां द्रुताशनसंशयभावाभावदर्शनात्तस्यापि तद्धेतुत्वम् अत एवोत्कटकोटिकव्याप्यसंशयाद्व्यापकस्याप्युत्कटकोटिकः संशयः कारणोत्कर्षेणैव कार्योत्कर्षात् न चैतद्भगवत्सूत्रकृदनभिमतमिति वाच्यम् सूत्रस्य चकारस्याप्यनुक्तसमुच्चायकत्वात् तथाहि समानाने

विप्रतिपत्तिस्तु शब्दो नित्यो न वेत्यादिशब्दात्मिका न संशयकारणम् शब्दव्याप्तिज्ञानादीनान्निश्चयमात्रजनकत्वस्वाभाव्यात् किन्तु तत्र शब्देन कोटिद्वयज्ञानञ्जन्यते संशयस्तु मानस एवेति एवं ज्ञाने प्रामाण्यसंशयाद्विषयसंशय इति एवम्व्याप्यसंशयादपि व्यापकसंशय इत्यादिकम्बोध्यम्॥

११ कधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशय इति सूत्रन्तस्य चार्थमाहुर्भाष्यकृत्प्रमुखाः समानधर्मः कोटिद्वयसहचरितधर्मः अनेकस्मात्सपक्षविपक्षाद्व्यावृत्तो धर्मस्त्वनेकधर्मः तयोरुपपत्तिर्ज्ञानं तस्माद्विप्रतिपत्तिर्विरुद्धकोटिप्रतिपादकं वाक्यं तस्मादत्र पञ्चम्याः प्रयोजकत्वमर्थो न हेतुत्वं उपलब्धिः प्रामाण्यम् अनुपलब्धिः प्रामाण्यविरोधि भ्रमत्वं तयोरव्यवस्थातश्च संशयः एवञ्च प्रामाण्यसंशयजन्यो भ्रमत्वसंशयजन्यश्च विषयसंशयः चकारो व्याप्यसन्देहादिजन्यव्यापकसन्देहादेः सङ्ग्राहकः विशेषापेक्षो विमर्श इति तु लक्षणम् एकधर्मिकभावाभावप्रकारकत्वरूपविशेषवान् विशेषापेक्षो विमर्शो ज्ञानमिति तदर्थः इत्यादिकमित्यादिना साधनाव्यापकव्याप्यत्वसन्देहादितः। साध्यव्यापकत्वसन्देहो बोध्यः साधारणज्ञानादेः कार्यतावच्छेदके चाव्यवहितोत्तरत्वन्देयन्तेन परस्परं न व्यभिचारः॥ ६ ॥ ६ ॥

का॰मु॰ ननुसाधारणधर्मज्ञानादेरिवधर्मिज्ञानस्यापिसंशयहेतुत्वात्तत्त्वेन संशयविभागःकथन्नप्रदर्शितइत्यतआह संशयेधर्मिज्ञानमितिसं
टि॰ शये संशयमात्रे तथाचधर्मिज्ञानजन्यतावच्छेदकस्यसंशयत्वस्यसमव्याप्यत्वान्नतद्विभाजकतावच्छेदकमितिभावः ननुधर्मिज्ञानस्य।
२१० संशयहेतुत्वेमानाभावः नचधर्मिज्ञानमन्तरेणसंशयःस्यादितिवाच्यम् सतिधर्मीन्द्रियसन्निकर्षेइष्टत्वादतआह धर्मीन्द्रियेति पित्तादीत्यादि
नामण्डूकवसाञ्जनादेः परिग्रहः अनुमानसिद्धत्वमेवप्रदर्शयति यथेति भगवत्तानेव्यभिचारवारणायहेतौजन्येति अर्थान्तरन्निराकुरु
ते नचेति ननुपित्तात्मकदोषाभावः श्वैत्यप्रमायामेवकारणन्नशङ्खत्वप्रमायामतआह विनिगमनाविरहादिति प्रमायान्दोषाभावःकार

किन्तुसंशयेधर्मिज्ञानन्धर्मीन्द्रियसन्निकर्षोवाकारणमिति १३१ अप्रमायान्त्विति दोषःकारणम् प्रमायान्तुगुणःकारण।
म् तत्रापिपित्तादिरूपादोषा अननुगताः तेषाङ्कारणत्वमन्वयव्यतिरेकाभ्यांसिद्धम् गुणस्यप्रमाजनकत्वन्त्वनुमा
नात्सिद्धम्। यथाप्रमाज्ञानसामान्यकारणभिन्नकारणजन्याजन्यज्ञानत्वादप्रमावत् नचदोषाभावएवकारणम।

॥ दोषोऽप्रमायाजनकः प्रमायास्तु गुणो भवेत् ॥

स्त्विति वाच्यम् पीतश्शङ्खइति ज्ञानस्थलेऽपिपित्तरूपदोषसत्त्वाच्छङ्खस्वप्रमानुत्पत्तिप्रसङ्गात् विनिगमनाविरहाद।
नन्तदोषाभावकारणत्वमपेक्ष्यगुणस्यकारणतायान्याय्यत्वात् नचगुणसत्त्वेऽपिपित्तेनप्रतिबन्धाच्छङ्खेनश्वैत्यज्ञान
म् अतः पित्तादिदोषाभावानाङ्कारणत्वमवश्यंवाच्यम् तथाचकिङ्गुणस्यहेतुत्वकल्पनेनेतिवाच्यम् तथाप्यन्वयव्यति
((रेकाभ्याङ्गुणस्यापिहेतुत्वसिद्धेः

णङ्गुणोवाकारणमित्यत्रविनिगमनाविरहादितिभावः वस्तुतोगुणहेतुतायामेवलाघवंविनिग राम॰
मकमस्तीत्याह अनन्तेतिन्याय्यत्वादिति अनुगतगुणत्वस्याग्रेवक्ष्यमाणत्वान्नतद्धेतुत्वमतेऽयन्दोषइतिभावः तथाचदोषाभावानांहेतुत्वस्यावश्य २१०
कत्वेच गुणस्यापीति तथाचपित्तादिदोषाभावसत्त्वेऽपि विशेषणवद्विशेष्यसन्निकर्षरूपगुणाभावान्नशङ्खे पीतत्वप्रमेति दोषाभावेननगुणस्या
॥ न्यथासिद्धिरितिभावः॥

एवं एवंसति अन्वयव्यतिरेकसत्वेपि यद्यन्यथासिद्धत्वन्नदेत्यर्थः गुणाभावः गुणाभावएवं ननुदोषःकारणंस्यादितिभावः एवमग्रेपिज्ञेय॥ मिति उपमितौ शक्येसादृश्यज्ञानम् शाब्दबोधेयोग्यतायाः तात्पर्यस्यवा प्रमैवगुणइतिभावः नन्वेवंरङ्गरजतयोरिमेरजतरङ्गे इतिज्ञानेऽतिव्या

एवम्भ्रमम्प्रतिगुणाभावःकारणमित्यस्यापिसुवचत्वात् तत्रदोषाः केइत्याकाङ्क्षायामाह पित्तेति क्वचित्पित्तादिर्भ्रमेपित्तंदोषः क्वचिच्चन्द्रादेःस्वल्पपरिमाणभ्रमेदूरत्वन्दोषः।क्वचिच्चवंशोरगभ्रमे मंडूकवसाञ्जनमित्येवंरूपादोषाअननुगताएवभ्रान्ति जनकाइत्यर्थः अथकेगुणाइत्याकाङ्क्षायाम्प्रत्यक्षादौक्रमेणगुणान्दर्शयति प्रत्यक्षेत्विति प्रत्यक्षेविशेषणवद्विशेष्यसन्नि कर्षोगुणः अनुमितौ साध्यवतिसाध्यव्याप्यवैशिष्ट्यज्ञानङ्गुणः एवमग्रेपिज्ञेयम् प्रमान्निरूपयति भ्रमभिन्नेति ननुयत्ररङ्गु

पित्तदूरत्वादिरूपोदोषोनानाविधोमतः १३१ प्रत्यक्षेतुविशेष्येणविशेषणवतासमम् सन्निकर्षोगुणस्तुस्याद् यत्वनुमितौपुनः १३२ पक्षेसाध्यविशिष्टेतुपरामर्शोगुणोभवेत्। शक्येसादृश्यबुद्धिस्तुभवेदुपमितौगुणः १३३ शाब्दबोधेयोग्यतायास्तात्पर्यस्याथवाप्रमा। गुणः स्याद्भ्रमभिन्नन्तुज्ञानमत्रोच्यतेप्रमा १३४ अथवातत्प्रकारंय ज्ज्ञानंतद्विशेष्यकम्॥

९९ त्रिरजतयोरिमेरजतेइतिज्ञानञ्ज्ञानन्तत्रोरजतांशेपिप्रमानस्यात् तज्ज्ञानस्यभ्रमभिन्नत्वा भावादतआह अथवेति तद्विशेष्यकत्वेसति तत्प्रकारकंज्ञानम्प्रमेत्यर्थः।अथैवंस्मृतेरपिप्रमात्वंस्यात्ततः किमितिचेत्तथासति तत्कारणस्यापिप्रमाणान्तरत्वंस्यादितिचेन्न यथार्थानुभवकरणस्यैवप्रमाणत्वेनविवक्षितत्वात् इदन्तुबोध्यम् येन संबंधेन यद्वत्तातेनसम्बन्धेनतत्प्रकारकत्वंवाच्यम् तेनकपालादौसंयोगादिनाघटादिज्ञानेनातिव्याप्तिः॥ ९९ त्रिरतआह तद्विशेष्यक त्वेसतीति तद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्ववज्ज्ञानमित्यर्थः।सतिसप्तम्या अवच्छिन्नार्थत्वात् तत्प्रकारक भ्रमेऽतिव्याप्तेस्तद्विशे ष्यकेति रजतएवद्रव्यमितिज्ञानेरजतत्वप्रमात्वापत्तिरतस्तत्प्रकारकेति ज्ञानपदञ्चतथाविधेच्छायामतिव्याप्तिवारणाय॥ श्रीः॥

का॰ मु॰ टि॰ २११ एवंसति तत्प्रकारकत्वस्यप्रमात्वघटकत्वेसतिभ्रमः प्रमाचस्यादिति लक्षणद्वयस्यतत्रसत्वादितिभावः नन्वेवंलक्षणाननुगमइत्यतआह लक्ष्यस्येति अथपाकरक्तेघटेश्यामरूपवत्ताप्रतीतेः प्रमात्वंस्यादितिचेदिष्टमेवैतत् घटस्यकदाचिच्छ्यामत्वात् वर्तमानस्यप्रमात्वाघटकत्वात् अत्रयद्यपिस्मृत्यन्यज्ञानत्वरूपाऽनुभवत्वस्यनिवेशेवैयर्थ्यात् ज्ञानस्यघटितमेवप्रमात्वंसुवचम् तथापितस्यस्मृतिसाधारणतयातत्करणस्यप्रमाणान्तरतापत्याशास्त्रेप्रमाणव्यवहारोपयिकंरूपमनुभवत्वघटितमेवानुमन्यन्तेतेतान्त्रिकाः। वस्तुतस्तुविशिष्टवैशिष्ट्यानुभवेविशेषणतावच्छेदकप्रकारकनिर्णयस्यकारणतयातज्जन्यतावच्छेदककोटिप्रविष्टतयानुभवत्वस्यजातिविशेषत्वेसिद्धेज्ञानत्वस्यानुभवत्वाघटि

एवंसतिनिर्विकल्पकंप्रमानस्यात् तस्यसप्रकारकत्वाभावादतआह तत्प्रमेति ननुवृक्षेकपिसंयोगज्ञानम्भ्रमःप्रमाचस्यादितिचेन्न प्रतियोगिव्यधिकरणसंयोगाभाववतिसंयोगज्ञानस्यभ्रमत्वात् नचवृक्षेकपिसंयोगाभावावच्छेदेनसंयोगज्ञानम्भ्रमोनस्यात् तत्रसंयोगाभावस्यप्रतियोगिसमानाधिकरणत्वादितिवाच्यम् तत्रसंयोगाभावावच्छेदेनसंयोगज्ञा

॥तत्प्रमानप्रमानापिभ्रमःस्यान्निर्विकल्पकम् १३५ प्रकारतादिशून्यंहिसंबंधा
॥नवगाहितत्। प्रमात्वंनस्वतोग्राह्यंसंशयानुपपत्तितः॥ १३६ ॥ श्री॰॥

नस्यभ्रमत्वात् लक्ष्यस्याननुगमाल्लक्षणाननुगमेपिनक्षतिः। प्रमात्वमिति। मीमांसकाहि प्रमात्वंस्वतोग्राह्यमितिवदन्ति तत्रगुरूणाम्मतेज्ञानस्यस्वप्रकाशत्वात्तज्ज्ञानप्रामाण्यन्तेनैवगृह्यतइति भट्टानाम्मतेज्ञानमतीन्द्रियञ्ज्ञानजन्यज्ञाततायाप्रत्यस्या॥

कत्वान्नानुभवत्वस्यवैयर्थ्यमितिक्तम्पल्लवितेन। प्रामाण्यन्नस्वतोग्राह्यमिति। मूले। स्वतोग्राह्यत्वन्निषिध्यते तत्रस्वतस्त्ववादिनःकेइत्याकाङ्क्षायामाह मीमांसकाहीति स्वप्रकाशकत्वादिति स्वविषयकत्वादित्यर्थः तेनैवगृह्यतइति ज्ञानेगृह्यमाणेतन्निष्ठज्ञानत्वादिधर्मवत्तन्निष्ठप्रामाण्यस्यापिग्रहेबाधकाभावान्नमतेसर्वञ्ज्ञानमयंघटोघटमहञ्जानामीत्याकारकमितिभावः॥ ६ ॥ राम २११

तथाचेति अयमत्रानुमानप्रकारः इयंज्ञातता घटविशेष्यकघटत्वप्रकारकज्ञानजन्या घटवृत्तिघटत्वप्रकारकज्ञाततात्वात् यायद्वृत्तिर्यत्प्रकारिका ज्ञातता सा तद्विशेष्यकतत्प्रकारकज्ञानसाध्या यथा पटे पटत्वप्रकारिका ज्ञाततेति अनुव्यवसायेनेति ननु ज्ञानं ज्ञानस्यविषयाविषयकत्वात्कथंविषयघटितप्रामाण्यन्तस्यविषयइत्यतोज्ञानंज्ञानस्यविषयविषयकत्वेप्रमाणमाह विषयनिरूप्यमिति विषयाविषयकप्रत्यक्षाविषयइत्यर्थः ज्ञानवित्तिवेद्योविषयइति विषयविषयकतानियतस्वविषयकप्रत्यक्षकज्ञानमित्यर्थः अतोनसाध्यहेत्वोर्वैयधिकरण्यम् तथाचज्ञानंविषयविषय

तथाचज्ञानमनुमीयते मुरारिमिश्राणाम्मतेऽनुव्यवसायेनज्ञानंगृह्यते सर्वेषामपिमतेतत्तज्ज्ञानविषयकज्ञानेनतज्ज्ञानप्रामाण्यङ्गृह्यते विषयनिरूप्यंहिज्ञानमतोज्ञानवित्तिवेद्योविषयः तन्मतन्दूषयति नस्वतोग्राह्यमिति संशयेति यदिज्ञानस्यप्रामाण्यंस्वतोग्राह्यंस्यात्तदानभ्यासदशापन्नज्ञाने प्रामाण्यसंशयोनस्यात् तत्रहियदिज्ञानञ्ज्ञातन्तदात्वन्मते प्रामाण्यञ्ज्ञातमेवेति कथंसंशयः यदितुज्ञानन्नज्ञातन्तदाधर्मिज्ञानाभावात्कथंसंशयस्तस्माज्ज्ञानेप्रामाण्यमनुमेयम् तथाहि इदंज्ञानंप्रमासम्वादिप्रवृत्तिजनकत्वात् यन्नैवंतन्नैवंयथाऽप्रमा इदम्पृथिवीत्वप्रकारकञ्ज्ञानंप्रमागन्धवतिपृथिवीत्वप्रकारकज्ञानत्वात् एवमिदञ्जलत्वप्रकारकञ्ज्ञानम्प्रमास्नेहवतिजलत्वप्रकारकज्ञानत्वात् नचहेतुज्ञानङ्कथञ्ज्ञातमितिवाच्यम् पृथिवीत्वप्रकारकत्वस्यस्वतोग्राह्यत्वात् तत्रगन्धग्रहेणगन्धवद्वि

॥ शेष्यकत्वस्यापिसुग्रहत्वात् ॥

कताकप्रत्यक्षकंविषयकप्रत्यक्षाविषयत्वेसतिप्रत्यक्षविषयकत्वादित्यनुमानञ्ज्ञानप्रत्यक्षस्यविषयकत्वेप्रमाणमितिभावः। भट्टमते चप्रत्यक्षस्थानाभिषिक्ता ज्ञानतालिङ्गकानुमितिरेवबोध्येत्यन्यत्रविस्तरः अनभ्यासदशापन्नेति अनवधृतप्रामाण्यसजातीयेत्यर्थः ज्ञातमेव निश्चितमेव गन्धवत्तीति व्याप्यवतिव्यापकप्रकारकत्वस्यव्यापकवतिव्यापकप्रकारकत्वव्याप्यत्वादितिभावः॥ ६ ॥

का॰ मु॰ ननु कथमत्र हि प्रामाण्यस्यानुमेयता गन्धवति पृथिवीत्वप्रकारकत्वस्यैव पृथिवीत्ववति पृथिवीत्वप्रकारकत्वादेरपि प्रत्यक्षसम्भवा
दि॰ दत आह तत्प्रकारकत्वेति संशयानुरोधादिति यद्यपि ज्ञाने प्रामाण्यनिश्चयो धर्मितावच्छेदकसामानाधिकरण्येन जायते सन्देहस्तु धर्मि
२९२ तावच्छेदकसामानाधिकरण्येन प्रामाण्याभावावगाही धर्मितावच्छेदकावच्छेदेन प्रामाण्यावगाहीति कथं संशयानुपपत्तिः तथापि मदु
तुपयुक्तस्य धर्मितावच्छेदकावच्छेदेन प्रामाण्यग्रहस्य सत्त्वे संशयानुपपत्तिर्दूषणमिति ध्येयम् नच प्रामाण्यग्राहकसामग्रीसत्त्वात्क
यमग्रिमसंशयानुरोधेन प्रामाण्याग्रह इति वाच्यम् तत्राग्रिमसंशयानुरोधेन जनकदोषस्य प्रामाण्यनिश्चयप्रतिबन्धकत्वकल्पनादित्याश
यात् ननु यदि प्रामाण्यमनुमेयन्तदा प्रामाण्यग्रहवैयर्थ्यम् तथाहि अयम्पुरुष इति निश्चये प्रामाण्यसन्देहे नार्थसन्देहः स्यादयम्पुरुषो न वेत्या।
कारकस्योत्पत्त्या पुरुषार्थिनः प्रवृत्तिर्न सम्भवति तत्र प्रामाण्यनिश्चये च न तत्संशयाधीनोऽर्थसन्देह इति प्रामाण्यग्रहस्य प्रवृत्तावुपयोगः प्रा

तत्प्रकारकत्वावच्छिन्नतद्विशेष्यकत्वमप्यवश्यं गृह्यते संशयानुरोधात् ननु सर्वेषां ज्ञानानां यथार्थत्वात्प्रमालक्ष-
णे तद्वद्विशेष्यकत्वविशेषणमव्यर्थम् नच रङ्गे रजतार्थिनः प्रवृत्तिर्भ्रमजन्या न स्यात्तव मते भ्रमस्याभावादिति वाच्य-
म् तत्र हि दोषाधीनस्य पुरोवर्त्तिनि स्वतन्त्रोपस्थितरजतभेदाग्रहस्य हेतुत्वात्॥ १ माण्यग्रहस्यानुमित्यात्मकत्वे च प्रामा

ण्यानुमापककरादिमति पुरुषत्वप्रकारकत्वादिरूपहेतुग्रहे तद्घटकतया पुरोवर्त्तिनि पुरुषत्वव्याप्यकरादिग्रहस्यावश्यकतया तेनैवा
यम्पुरुषो न वेति सन्देहप्रतिबन्धसम्भवादलम्प्रामाण्यानुमानेनेति चेन्न करादौ पुरुषत्वव्याप्यत्वग्रहम्विनापि करादिमति पुरुषत्वप्रकार
कत्वहेतोः पुरुषत्वघटितप्रामाण्यव्याप्यत्वग्रहसम्भवेन प्रामाण्यानुमानसम्भवात् एवन्न्यायमतेऽनुमितेरिव द्वितीयानुव्यवसायस्यापि राम
प्रामाण्यग्राहकत्वमित्यन्यत्र विस्तरः। गुरुः शङ्कते नन्विति व्यर्थमिति व्यावर्त्त्याभा अन्यथाख्यातेरभावादिति भावः भ्रमजन्येति न्यायनये भ्र २९२
मजन्या प्रवृत्तिस्तव मते न स्यादित्यर्थः भ्रमस्यान्यथाख्यातेः तत्र रङ्गगोचरविसम्वादिरजतार्थिप्रवृत्तौ रजते इदं रजतमिति ज्ञानकाले रजतभे
दाग्रहसत्त्वाद्विसम्वादिप्रवृत्त्यापत्तिवारणाय दोषाधीनस्येत्युक्तम् न्यायनये दोषाधीनो योऽरजतभ्रमस्तस्यानभिषिक्तरजतभेदाग्रहस्यैव
॥ तन्मते दोषाधीनतया रज ॥

तेरजतभेदाग्रहस्यादोषाधीनत्वादितिभावः यत्ररङ्ग·गोचरमेतद्रजतवद्भूतलमितिज्ञानन्तत्रविसम्वादितादृशप्रवृत्तिवारणाय स्वतन्त्रोपस्थितेतिरजतविशेषणम् मुख्यविशेष्यतयोपस्थितत्वन्तदर्थः वस्तुतोरङ्ग·गोचरादेतद्रजतवद्भूतलमितिज्ञानादपिप्रवृत्तिरिष्टैवेति स्वतन्त्रोपस्थितत्वन्नदेयमितिध्येयम् हेतुत्वादिति ॥ ६ ॥ न्यायनयेपीदंरजतमितिभ्रमेहेतुतयारजतभेदाग्रहस्यतत्रावश्यकतयातस्यैवहेतुत्वमप्रयुक्तन्नाहेतोरितिन्यादितिभावः कार्यकारणभावद्वयकल्पनापेक्षयालाघवादाह अस्त्वेवेति तत्रापिसत्यरजतगोचरप्रवृत्तावपि। अपिनारङ्ग·गोचरप्रवृत्तिपरिग्रहः रजतभेदाग्रहः रजतभेदासंसर्गाग्रहाभावः यथाश्रुतेरजतेनेदंरजतमितिग्रहेपिप्रवृत्त्यापत्तेः प्राभाकरमतेतत्ररजतभेदग्रहाभावस्यसत्वादन्यथान्यथाख्यात्यापत्तेरिति यद्यपिपुरोवर्त्तिविशेष्यकस्यरजतभेदासंसर्गाग्रहस्यसमवायेनाभावोविशेषणतयात्मनिष्ठः प्रतिबन्धकस्तदभावः कारणमितिफलितम् तथाच रङ्गे·नेदंरजतमितिग्रहेपिप्रवृत्त्यापत्तिः रङ्ग·विशेष्यकरजतभेदासंसर्गाग्रहस्यान्यथाख्यात्यनङ्गीकर्त्तृमतेः प्रसिद्धत्वेनतदभावस्यप्रतिबन्धकत्वासम्भवात् तथापिविषयतासम्बन्धेन

**सत्यरजतस्थलेतुविशिष्टज्ञानस्यसत्वात्तदेवकारणम् अस्तुवातत्रापिरजतभेदाग्रहएवकारणमिति॥**

प्रवृत्तिम्प्रतिरजतभेदासंसर्गाग्रहस्यविशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकोयोऽभावः सविशेषणतासम्बन्धेनप्रतिबन्धकइतिविषयनिष्ठतयाप्रतिबध्यप्रतिबन्धकभावकल्पनान्नोक्तदोषः एवञ्चतत्पुरुषीयत्वंप्रतिबध्यप्रतिबन्धकत्वयोरवच्छेदककोटौनिवेशनीयमतोनपुरुषभेदमादायदोषः नचैवंरङ्गे·इदंरजतमितिभ्रमानन्तरन्तत्रप्रवृत्तिर्नस्यात् रजतभेदासंसर्गाग्रहस्यान्यथाख्यात्यापत्त्यातत्रानङ्गीकारेणतदभावरूपस्यप्रतिबन्धकस्यसत्वादितिवाच्यम् रजतभेदोपस्थितिविशिष्टस्यैवरजतभेदासंसर्गाग्रहाभावरूपस्यप्रतिबन्धकत्वोपगमात् नचैवमपिरङ्गे·इदंरजतंघटोनरजतमितिज्ञानानन्तरमप्रवृत्त्यापत्तिरितिवाच्यम् रजतभेदग्रहप्रतिबन्धकदोषस्योत्तेजकत्वकल्पनात्तत्ररङ्गे·रजतभेदग्रहानुत्पत्त्यातत्प्रतिबन्धकदोषस्यस्वीकरणीयत्वात् नचरङ्गे·रजतभ्रमजनकदोषएवोत्तेजकोऽस्तुकिंरजतभेदग्रहप्रतिबन्धकदोषस्योत्तेजकत्वस्वीकारेणएवंचरजतभेदोपस्थितिवैशिष्ट्यमपिप्रतिबन्धकेविशेषणन्नदेयंरजतभेदानुपस्थितिका॥ ७ ॥

का० सु० लेरङ्गे इदं रजतमिति ज्ञानाद्‌प्रवृत्तिप्रसंगाभावात्तत्र रजतभेदासंसर्गग्रहस्यप्रतिबन्धकस्य रङ्गे रजतभ्रमजनकदोषरूपो नेज
टि० कविशिष्टत्वादितिवाच्यम् रङ्गे इदं रजतमितिभ्रमस्यन्यायमतसिद्धस्यतन्मतेः भावेन तत्र तादृशदोषस्यानङ्गीकारात् ॥ ९ ॥ सम्भ
२१३ वतीत्यनन्तरं येन विसम्वादिप्रवृत्तौ न हेतुत्वं स्यादिति पूरणीयम् सन्निकर्षस्याभावादिति ज्ञानलक्षणायाः प्रत्यासत्त्यन्तरस्य कल्प।
ननु गौरवदोषदुष्टमित्यभिमानः हेतुताया इत्यस्यान्वयव्यतिरेकाभ्यामिति शेषः अन्यत्रापि रङ्गगोचररजतार्थिप्रवृत्तावपि तत्क।
ल्पनात् विशिष्टज्ञानहेतुत्वकल्पनात् नचात्रमानाभावइतिवाच्यम् रङ्गे रजतार्थिप्रवृत्तिरिष्टप्रवृत्तिविषयविशिष्टज्ञानसाध्याप्र
वृत्तित्वाद्रजते रजतप्रकारकप्रवृत्तिवदित्यनुमानस्यैव तत्र मानत्वात् अत्राप्रयोजकमाशङ्कते नचेति लाघवेनेति सम्वादिविसंवादिभेदे

नचान्यथाख्यातिः सम्भवति रजतप्रत्यक्ष कारणस्यरजतसन्निकर्षस्याभावात् रङ्गे रजतबुद्धेरनुपपन्नेरिति।
चेन्न सत्यरजतस्थले प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुतायाः क्लृप्तत्वात् अन्यत्रापि तत्कल्पनात् नच सम्वादिप्र
वृत्तौ न त्वकारणं विसम्वादिप्रवृत्तौ च भेदाग्रहः कारणमिति वाच्यम् लाघवेन प्रवृत्तिमात्रे तस्य हेतुत्वकल्पनात् इ
त्यश्च रङ्गे रजतत्वविशिष्टबुद्ध्यनुरोधेन ज्ञानलक्षणाप्रत्यासत्तिकल्पनेऽपि न क्षतिः फलमुखगौरवस्यादोषात् ॥ ९ ॥

नकार्यकारणभावद्वयमपेक्ष्य प्रवृत्तिमात्रे विशिष्टज्ञानस्यैव हेतुत्वकल्पना लाघवेनेत्यर्थः। तथा च लाघवज्ञानरूपानुकूलतर्क।
स सत्वान्नाप्रयोजकत्वमितिभावः। रजतांशेऽपि सन्निकर्षाभावान्नान्यथाख्यातिः सम्भवतीति प्राभाकरोक्तन्दूषणमुद्धरति। इ
त्यश्चेति प्रवृत्तिमात्रे विशिष्टबुद्धेर्हेतुत्वसिद्धौ चेत्यर्थः। फलमुखेति कार्यकारणभावग्रहात्मकफलात्पूर्वङ्गौरवस्यानिर्णयाद्गौरवा।
सन्देहस्य चाप्रतिबन्धकत्वादितिभावः ॥ ९ ॥ नन्वस्तु विसम्वादिप्रवृत्तिसाधारणप्रवृत्तित्वावच्छिन्नं प्रत्येव भेदाग्रहः कारणमिति राम
नकार्यकारणभावद्वयकल्पनागौरवम् नच विशिष्टज्ञानत्वापेक्षयेष्टभेदाग्रहाभावत्वस्य कारणतावच्छेदकत्वे गौरवमिति वाच्यम् र २१३
॥॥ जतत्वविशिष्टानुमित्यादौ रजतभेदाग्रहत्वेन कारणत्वे तत्रैव प्रवृत्तिसाधारणरजतत्व॥

विशिष्टविषयकत्वस्यैव कार्यतावच्छेदकत्वकल्पनेनैव निर्वाहात् न्यायनये तु प्रवृत्तित्वावच्छिन्नं प्रति विशिष्टज्ञानत्वेन हेतुत्वान्तर कल्पने गौरवमिति न तदनुरोधेन कल्पनीयभ्रमात्मकरजतज्ञानार्थं ज्ञानलक्षणाप्रत्यासत्त्यादरङ्गति कारणबाधाद्बाधितमेव मिथ्या। ज्ञानमित्याशङ्कां मनसि निधाय स्थलविशेषे कारणबाधाभावादनिवार्यमेव मिथ्याज्ञानमित्याह किञ्चेत्यादिना यत्र रजते रजतभेद ग्रहो नन वा रङ्गे रजतभेदग्रहस्तत्र सति युगपदिन्द्रियसन्निकर्षे रजतरङ्गयोरिमे रजते इति ज्ञानेन किमपि बाधकम् रजतत्वेन समं संयुक्तसमवायस्य सत्त्वात् तादृशज्ञाने रङ्गांशे न प्रमात्मकं विशेषणवद्विशेष्यसन्निकर्षरूपप्रमासामग्र्यभावात् किन्त्वन्यथाख्याति। रेवेति भावः। ननु तद्विशेष्यतत्तद्विशिष्टबुद्धिं प्रति तत्तद्विशेषणतत्तद्विशेष्यघटितसन्निकर्षो हेतुरन्यथातिप्रसङ्गात् तथा च कथं रजतघा। टितसंयुक्तसमवायेन रङ्गे रजतत्वग्रह इत्यत आह अपि चेति अन्यथाख्यातिभयादित्यनन्तरं रङ्गे रङ्गभेदाग्रहस्य रजते रजतभेदाग्र

किञ्च यत्र रङ्गरजतयोरिमे रजते रङ्गे चेति ज्ञानं जातं तत्र न कारणबाधोऽपि अपि च यत्र रङ्गरजतयोरिमे रजतरङ्गे इति ज्ञानं तत्रोभयत्र युगपत्प्रवृत्तिनिवृत्ती स्याताम् रङ्गे रङ्गभेदग्रहे रजते रजतभेदग्रहे चान्यथाख्यातिभयात् त्वन्मते दोषादेव रङ्गे रजतभेदाग्रहस्य रजते रङ्गभेदाग्रहस्य च सत्त्वात् किञ्चानुमितिं प्रति भेदाग्रहस्य हेतु। त्वे जलह्रदे वह्निव्याप्यधूमवद्भेदाग्रहादनुमितिर्निराबाधा॥ ६॥

(९) हस्येति पूरितस्य सत्त्वादित्यनेनान्वयः। अनेन रङ्गेऽनिष्टभेदाग्रहरूपा निवृत्तिसामग्री रजते इष्टभेदाग्रहरूपा प्रवृत्तिसामग्री च प्रदर्शिता रङ्गे रजतभेदाग्रहस्येत्यादिना च रङ्गे इष्टभेदाग्रहरूपा प्रवृत्तिसामग्री रजतेऽनिष्टभेदाग्रहरूपा निवृत्तिसामग्री च प्रदर्शिता दोषादेवेति त्वन्मते न्यायाभिमतभ्रमस्थलाभिषिक्तभेदाग्रहस्य प्रति दोषस्य हेतुत्वादिति भावः। इदं त्विष्टभेदाग्रहः प्रवृत्तिकारणमनिष्टभेदाग्रहो निवृत्तिकारणमिति यथाश्रुताभिप्रायेण इष्टभेदोपस्थितिविशिष्टेष्टभेदासंसर्गाग्रहः प्रतिबन्धकस्तदभावः कारणमिति दर्शितं निष्कर्षे तु रजतभेदोपस्थितिविशिष्टरजतभेदासंसर्गाग्रहस्य प्रतिबन्धकस्य रङ्गेऽभावादिति रीत्या सामग्री बोध्या न तु रङ्गे रजतभेदाग्रहप्रयोजकदोषस्य प्रतिबन्धकत्वात् रङ्गे निवृत्तिरेवं र॥ जते रङ्गभेदाग्रहप्रयोजकदोषस्य प्रतिबन्धकत्वात्॥

का॰मु॰ न्नरजते प्रवृत्तिरिति कथं युगपत्प्रवृत्तिनिवृत्त्योरापादनमित्यत आह किन्त्वेति भेदाग्रहस्य व्याप्यवद्भेदाग्रहस्य अनुमितिर्निराबाधेति सति।
दि॰ बाधाभावेऽन्यथाख्यातिरूपानुमितिर्निराबाधेत्यर्थः ॥ ७ ॥ आपततिनमिति अन्यथाख्यातिरूपमापततमित्यर्थः ननु ह्रदे वह्निव्याप्यधूम
२१४ वद्भेदाग्रहान्न ह्रदो वह्निमानित्यन्यथाख्यातिरूपानुमितिः परन्तु गृहीतासंसर्गकज्ञानद्वयमेवात्रोत्पद्यते न च तत्र विशिष्टज्ञानोत्पत्तौ बाध
काभावः व्याप्यवद्भेदाग्रहस्य ह्रदो वन्हिमानित्यन्यथाख्यातिरूपानुमितिकारणस्य सत्त्वादिति वाच्यम् अन्यथाख्यातौ प्रमाणाभावेन तादृ
शकार्यकारणभावस्याकल्पनादतस्तत्र प्रमाणम्प्रदर्शयति इत्यञ्चेति यद्वा ननु अनुमितिम्प्रति विशिष्टज्ञानस्यैव हेतुत्वं यत्र च न तादृशवि
शिष्टबोधस्य सामग्री तत्र लिङ्गासंसर्गाग्रहाल्लिङ्गसंसर्गाग्रहस्यैव परैरुपगमात्तायःपिण्डे वन्ह्यनुमित्यनुरोधादन्यथाख्यातिरित्यत
आह इत्यञ्चेति चकारोऽप्यर्थः ननु तादृशानुव्यवसायो नेदंविशेष्यकज्ञाने रजतत्वप्रकारकत्वविशिष्टबुद्धिरूपः परन्तु रजतत्वप्र।

यदि च विशिष्टज्ञानङ्कारणन्तदाऽयोगोलके वन्हिव्याप्यधूमज्ञानमनुमित्यनुरोधादापतितं सेयमुभयतःपा।
शारज्जुः इत्यञ्चान्यथाख्यातौ प्रत्यक्षमेव प्रमाणम् रङ्गं रजततयाऽवेदिषमित्यनुभवादिति संक्षेपः।१३२।१३३
।१३४।१३५।१३६॥ पूर्वम्व्याप्तिरुक्ता तद्ग्रहोपायस्तु न दर्शित इत्यतस्तन्दर्शयति व्यभिचारेति व्यभिचारग्रहस्य व्या
॥प्तिग्रहे प्रतिबन्धकत्वात्तदभावः प्रकारणम्

कारकत्वासंसर्गाग्रहरूप एवेत्यत आह। संक्षेप इति। विद्यमानेऽपि भेदग्रहे आ
हार्यप्रत्यक्षोत्पादादिच्छाया उत्तेजकत्वं वाच्यम् इच्छानामुत्तेजकत्वानुरोधेन चानुमितित्वादीनामेव कार्यतावच्छेदकत्वात्प्रवृत्ति।
त्वावच्छिन्नम्प्रति भेदग्रहाभावत्वेन पृथक्कारणत्वेन गौरवापत्त्या विशिष्टज्ञानत्वेनैव तत्र हेतुता कल्पनीयेति विसम्वादिप्रवृत्त्यनुरोधे
नान्यथाख्यातिर्दुर्वारैवेति भावः ननु प्रामाण्यमनुमानगम्यन्तदा भवेद्यद्यनुमानम्प्रमाणम्भवेत्तदेव न सम्भवति व्याप्तिग्राहकाभावे। राम
नाज्ञानादित्यतः प्रामाण्यानुमितिप्रयोजकतया व्यभिचारस्याग्रहोऽथ सहचारग्रहस्तथेति मूलेन व्याप्तिग्रहोपायो दर्श्यते स चायुक्तः २१४
स्वकारणीभूतव्याप्तिस्वरूपज्ञानाभावादित्यत आह पूर्वं व्याप्तिरुक्तेति व्यभिचाराग्रहस्य व्याप्तिग्राहकतामुपपादयति ॥ ६ ॥

व्यभिचारग्रहस्येति सहचारग्रहस्यतामुपपादयति एवमिति भूयोदर्शनस्यकारणत्वङ्खण्डयति भूयोदर्शनन्त्विति व्यतिरेकव्यभिचारमाह सकृद्दर्शनेपीति भूयोदर्शनस्याहेतुत्वेपिक्वचित्प्रयोजकतयातदादरइत्याह क्वचिदिति तर्कोऽपेक्षितइतिशङ्कापनयनार्थन्तर्कोऽपेक्षितइत्यर्थः। तद्दर्शयति तथाहीत्यादिना यद्ययमिति अयन्धूमवान्पर्वतः कारणंविनेति तथाचधूमोवन्हिव्यभिचारी

व्यभिचारग्रहस्यव्याप्तिग्रहेप्रतिवन्धकत्वात्तदभावः कारणमित्यर्थः एवमन्वयव्यतिरेकाभ्यांसहचारग्रहस्यापिहेतुताभूयोदर्शनन्तुनकारणम् व्यभिचारास्फूर्तौसकृद्दर्शनेपि क्वचिद्व्याप्तिग्रहात् क्वचिद्व्यभिचारशङ्काविधूननद्वाराभूयोदर्शनमुपयुज्यते यत्रतुभूयोदर्शनादपिशङ्कानापैतितत्रविपक्षेवाधकतर्कोपेक्षितः तथाहि वन्हिविरहिण्यपि

॥ व्यभिचारस्याग्रहोयसहचारग्रहस्तथा । हेतुर्व्याप्तिग्रहेतर्कःक्वचिच्छङ्कानिवर्त्तकः॥ १३७ ॥ ९॥

धूमःस्यादिति यद्याशङ्काभवति तदासावन्हिधूमयोः कार्यकारणभावस्यप्रतिसन्धानान्निवर्त्तनेयद्ययंवन्हिमान्नस्यात्तदाधूमवान्नस्यात्कारणंविनाकार्यानुपपत्तेः यदिचक्वचित्कारणंविनाकार्यम्भविष्यति तदाऽहेतुकएवभविष्यतीति तत्राप्याशङ्काभवेत् तदासाव्याघातादपसारणीया यदिहिकारणंविनाकार्य्यंस्यात्तदाधूमार्थंवन्हेस्तृप्त्यर्थम्भोजनस्यनियमतउपादानन्नैवनस्यादिति॥

स्याद्वन्हिजन्योनस्यादिति तर्काकारोवोध्यः।यथास्मुनेवन्हिमान्नस्याद्धूमवान्नस्यादिति तर्कस्यविषयपरिशोधकस्यव्याप्तिग्रहानौपयिकतयासङ्गतेः।तत्रापितादृशतर्ककारणीभूतकार्यकारणभावग्रहेपि। आशङ्काभवेत् आशङ्काप्रतिवन्धिकाभवेत् व्याघातमेव

॥ दर्शयति यदिहीत्यादिना ॥

ननु तर्कस्तत्याप्याद्यव्याप्यापादकवत्ताज्ञानङ्कारणन्तत्र व्याप्तिज्ञानप्रतिबन्धकव्यभिचारशङ्कानिवर्त्तकस्तर्कोऽपेक्षित एवमग्रे
ऽपीत्यनवस्थेत्यत आह यत्रेति स्वत एव शङ्कोसामग्रीविरहादेव न तर्कापेक्षेत्यनन्तरमतो नानवस्थेति शेषः। ननु तर्कस्य न व्यभिचा
रशङ्कानिवर्त्तकत्वन्तर्ककारणीभूतव्याप्तिज्ञानेनैव तन्निवृत्तेः सम्भवादिति चेदत्र केचित् अनाहार्यशङ्कायास्तर्ककारणीभूतज्ञा
नेन निराससंभवेप्याहार्यशङ्कायास्ततो निवृत्तिर्न सम्भवति आहार्यज्ञानस्य तदप्रतिबध्यत्वात्किन्तु तर्केणैव तथाहि अनिष्टप्रसञ्ज
नात्मकेन तर्केणापादकज्ञाने आपाद्यज्ञानरूपानिष्टसाधनत्वज्ञानजननद्वारापादकज्ञाने द्वेषो जन्यते तेन चापादकज्ञाने इच्छा
प्रतिबन्धः क्रियते एवञ्चेच्छारूपकारणविरहादेवनाहार्यशङ्कोत्पत्तिरित्यर्थवशासम्पन्नमेव तर्के तन्निवर्त्तकत्वमिति केचित्तु
तर्कस्य शङ्कानिवर्त्तकत्वम्व्याप्तिज्ञानकारणीभूतो यो व्यभिचारशङ्काविरहस्तत्सम्पादकत्वम् एवञ्च व्यभिचारशङ्काप्रतिबन्ध

यत्र स्वत एव शङ्का नावतरति तत्र न तर्कापेक्षापीति तदिदमुक्तन्तर्कः क्वचिच्छङ्का
निवर्त्तक इति इदानीम्परकीयव्याप्तिग्रहप्रतिबन्धार्थमुपाधिन्निरूपयितुमाह॥ ६ ॥

कतायान्तर्कस्योत्तेजकतयोत्तेजकाभावविशिष्टव्यभिचारशङ्काविरहसम्पादकत्वमक्षुण्णमेव तर्कस्येत्याहुः परे तु तदापादकका
पत्तित्वेनाहार्यानाहार्यसाधारणतद्विशिष्टबुद्धित्वावच्छिन्नम्प्रति प्रतिबन्धकतया तर्कस्य व्यभिचारशङ्कानिवर्त्तकत्वमित्याहुः तर्कश्चा
हार्यारोपविशेषः। तत्वञ्च मानसत्वव्याप्योजातिविशेषस्तर्कयामीत्यनुभवाज्जिज्ञासाविशेषनिवर्त्तकतया वा सिद्ध इति तर्कश्च द्विवि
धो विषयपरिशोधको व्याप्तिग्राहकश्चेति। तत्र विषयपरिशोधको निर्वह्निः स्यान्निर्धूमः स्यादित्यादिः। धूमो यदि वह्निव्यभिचारी स्याद्व 
न्हिजन्यो न स्यादित्यादिश्च व्याप्तिग्राहकः। विस्तरस्तु अन्यत्रानुसन्धेयः। इदानीम्व्याप्तिग्रहोपायनिरूपणानन्तरम्व्या 
प्तिनिश्चयाभावप्रयोजकव्यभिचारशङ्काकारणज्ञानविषयत्वेनोपाधेः स्मरणे सति तथा च प्रसङ्गसङ्गत्योपाधिनिरूपणमिति भावः॥ ६ ॥

सिद्धिविषयत्वरूपसाध्यत्वस्यसिद्धिजनकत्वरूपसाधनत्वस्यचसोपाधावभावादभिमतेति। योयदवच्छिन्नव्यापकत्वेसतियदवच्छि।न्नाव्यापकः सतदवच्छिन्नसाध्यकतदवच्छिन्नहेतावुपाधिरित्यर्थः। यथाश्रुतेभिमतस्यविशेषणत्वेयत्रनतदभिमानस्तत्राव्याप्तिःस्यात् यदवच्छिन्नविवक्षणाद्गुणकर्मान्यत्वविशिष्टसत्तावाञ्ज्ञातिमत्वादित्यादौसू योगीगुणकर्मान्यत्वविशिष्टसत्तात्वादित्यादौचनाव्याप्तिःति व्याप्तौव्यापकत्वाव्यापकत्वस्यएकप्रकारेणैकसम्बंधेनचविवक्षितेः। तेनद्रव्यत्वत्वेनसमवायसम्बन्धेनचवह्निम्प्रतिव्यापकस्यद्रव्यत्वस्यद्वि त्वादिनासंयोगादिसम्बन्धेनचधूमम्प्रत्यव्यापकत्वेपिवह्निमान् धूमादित्यत्रद्रव्यत्वादौनातिव्याप्तिः। सश्यामइति काकःश्यामोमित्रातन

साध्यस्येति साध्यत्वाभिमतव्यापकत्वेसतिसाधनत्वाभिमताव्यापकत्वमुपाधिरित्यर्थः। ननुसश्यामोमित्रातनयत्वा त्वादित्यत्रशाकपाकजन्यत्वन्नोपाधिःस्यात्तस्यसाध्यव्यापकत्वाभावाच्छ्यामत्वस्यघटादावपिसत्वात् एवंवायुःप्रत्य क्षःप्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्वन्नोपाधिःस्यात् प्रत्यक्षत्वस्यात्मादिषुसत्वात् तत्रचरूपाभावात् एवन्ध्वंसो

॥ साध्यस्यव्यापकोयस्तुहेतोरव्यापकस्तथा। सउपाधिर्भवेत्तस्यनिष्कर्षोयम्प्रदर्श्यते॥ १३८॥

विनाशीजन्यत्वादित्यत्रभावत्वन्नोपाधिःस्याद्विनाशित्वस्यप्रागभावेसत्वात् तत्रभावत्वाभावादितिचेन्न यद्धर्मावच्छि न्नसाध्यव्यापकत्वन्तद्धर्मावच्छिन्नसाधनाव्यापकत्वमित्यर्थेतात्पर्यात्॥ ९ यत्वादित्यादावित्यर्थः तेनवक्ष्यमाणेनध्वंसोवि नाशीजन्यत्वादित्यनेननपौनरुक्त्यम् अस्यसाधनावच्छिन्नसाध्यव्यापकत्वादग्रिमस्यसाधनरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वात् साध्या व्यापकत्वमुपपादयति। श्यामत्वस्येति। ननुसाधनावच्छिन्नसाध्यव्यापकत्वंविवक्षणीयमतोनोक्ताव्याप्तिरतःपक्षधर्मावच्छिन्नसाध्यव्याप। कोपाधावव्याप्तिमाह एवंवायुरिति। अत्रप्रत्यक्षम्प्रत्युद्भूतरूपस्यव्यापकत्वेरूपस्यसुतराम्व्यापकत्वमित्युद्भूतपदम्व्यर्थन्नत्थाप्युपाधेःसाध्य। व्यापकत्वेकार्यकारणभावलक्षणानुकूलतर्कदर्शनार्थन्तदितिध्येयम् पक्षधर्मावच्छिन्नसाध्यव्यापकत्वोक्तौतुपूर्वोक्तशाकपाकजत्वाव्याप्ति ॥ रितिभावः अव्याप्तीःपरिहरति॥

मित्रातनयत्वेत्यादिना। व्यभिचारिणि त्वित्यादि वायुः प्रत्यक्षो द्रव्यत्वादित्यादौ प्रत्यक्षत्वरूपसाध्याधिकरणमात्मा उद्भूतरूपात्मकोपाधिशू
न्यं साध्यव्यभिचाराधिकरणं गगनन्तदन्यतरत्वावच्छिन्नसाध्यव्यापकत्वं सोद्भूतरूपेऽभावादुक्तमुपाध्यधिकरणमिति उद्भूतरूपाधिक
रणपरमाण्वाकाशान्यतरत्वावच्छिन्नसाध्याप्रसिध्या तद्दोषतादवस्थ्यमतः साध्याधिकरणमिति। उद्भूतरूपाधिकरणम् यत्प्रत्यक्षत्वाधि
करणं घटादिस्तद्वृत्तिद्रव्यत्वाव्यापकधर्मावच्छिन्नसाध्यव्यापकत्वाभावादुक्तं यच्चेत्यादि तत्रापि साध्यव्यभिचाराधिकरणपरमाणुघटान्य-
तरत्वावच्छिन्नद्रव्यत्वात्मकसाधनव्यापकत्वादुपाधिशून्यमिति तत्रैवोपाध्यधिकरणसाध्याधिकरणं घट उपाधिशून्यमधिकरणमात्मा तद
न्यतरत्वावच्छिन्नसाध्यव्यापकत्वाभावात्साध्यव्यभिचाराधिकरणमिति। उद्भूतरूपत्वाधिकरणं यत्प्रत्यक्षत्वाधिकरणं घटः यच्चोद्भूतरू

मित्रातनयत्वावच्छिन्नश्यामत्वस्य व्यापकं शाकपाकजत्वन्तदवच्छिन्नसाधनाव्यापकञ्च एवम्पक्षधर्मवहिर्द्रव्यत्वा
वच्छिन्नप्रत्यक्षत्वस्य व्यापकमुद्भूतरूपवत्वम् एवं बहिर्द्रव्यत्वावच्छिन्नसाधनस्याव्यापकञ्च एवन्ध्वंसोऽविनाशी जन्यत्वादि-
त्यत्र जन्यत्वावच्छिन्नसाध्यव्यापकत्वं भावत्वम् सद्धेतावेतादृशो धर्मो नास्ति यदवच्छिन्नसाध्यस्य व्यापकत्वन्तदवच्छिन्नस्य-
साधनस्य चाव्यापकं किञ्चित्स्यात् व्यभिचारिणि तु उपाध्यधिकरणं यत्साध्याधिकरणं यच्चोपाधिशून्यं साध्यव्यभिचाराधिकर
णन्तदन्यतरत्वावच्छिन्नस्य साध्यस्य व्यापकत्वं साधनस्य वाव्यापकत्वमुपाधेरनन्तः सम्भवतीति ॥ १३८ ॥ ((पशून्यमप्रत्यक्षत्वाभा-

वाधिकरणमतीन्द्रियरूपादि तदन्यतरत्वावच्छिन्नद्रव्यत्वरूपसाधनाव्यापकत्वं सोद्भूतरूपेऽभावात्साध्याभावाधिकरणमिति परिशिष्यन्त्यसा
ध्यव्यभिचाराधिकरणमित्युक्तम् तदर्थश्च साधननिष्ठसाध्यव्यभिचारनिरूपकाधिकरणत्वं अनन्तत इति तादृशधर्मान्तरस्यास्फूर्त्तेर्वेत्यर्थः
ननु साध्यव्यापकत्वं साध्यनिष्ठव्याप्तिनिरूपकत्वन्तथा च शुद्धसाध्यव्यापके धूमादिनिष्ठव्याप्तेः केवलधूमत्वावच्छिन्नत्वात्कथं तादृशधर्मा
न्तरावच्छिन्नधूमादिनिष्ठव्याप्तिनिरूपकत्वमार्द्रेन्धनादीनामिति वाच्यम् तद्धर्माधिकरणीभूतसाध्याधिकरणनिष्ठाभावाप्रतियोगित्वरू
पस्यैव तद्धर्मावच्छिन्नसाध्यव्यापकत्वस्य लक्षणे प्रवेशान्न तु यद्धर्मावच्छिन्नसाध्यनिष्ठव्याप्तिनिरूपकत्वस्येत्याशयात् ॥ श्रीः ॥

धूमवान्वन्हेरित्यादावयःपिण्डमहानसान्यतरत्वावच्छिन्नसाध्यव्यापकंव्यञ्जनवत्त्वादिकंसंग्राह्यमेवेतिध्येयम्॥१३८॥ अतएव यद्धर्मा
वच्छिन्नत्वघटितनिरुक्तलक्षणस्यतात्पर्यविषयत्वादेव एतदनुसारेणनिरुक्तलक्षणानुसारेण स्वस्यसाध्यमितिषष्ठीतत्पुरुषभ्रमम्
व्यावर्तयितुमाह स्वञ्चेति नव्यास्तुयदभावेनयद्वत्त्वेनवासाधनवतिसाध्याभाव उन्नीयतेसउपाधिर्लाघवात् अतएवजलत्वतेज।
स्त्वयोरुभयत्वेन रूपेणनकश्चिदप्युपाधित्वमित्याहुः तद्धर्मवत्त्वपाधिव्यभिचारेण तद्धर्माधिकरणीभूतंयदुपाध्यभावाधिकरण तद्वृ

अतएवलक्ष्यमप्युपाधिस्वरूपमेतदनुसारेणदर्शयति सर्वइति स्वञ्चसाध्यञ्च स्वसाध्ये तयोर्व्यभिचारितेत्यर्थः।उपाधे
दूषकताबीजमाह व्यभिचारस्येति उपाधिव्यभिचारेणहेतौसाध्यव्यभिचारानुमानमुपाधेःप्रयोजनमित्यर्थः।तथाहियत्रशु।
द्धसाध्यव्यापकउपाधिस्तत्रशुद्धेनैवोपाधिव्यभिचारेणसाध्यव्यभिचारानुमानम् यथाधूमवान्वन्हेरित्यादौवन्हिर्धूमव्य

सर्वेसाध्यसमानाधिकरणाः स्युरुपाधयः। हेतोरेकाश्रयेयेषांस्वसाध्यव्यभिचारिता १३९ व्यभिचारस्या
नुमानमुपाधेस्तुप्रयोजनम्॥

११ भिचारीतद्व्यापकार्द्रेन्धनसंयोगव्यभिचारित्वादिति व्यापकव्यभिचारिणो व्या।
प्यव्यभिचारावश्यकत्वात् यत्रतुकिञ्चिद्धर्मावच्छिन्नसाध्यस्यव्यापकउपाधिस्तत्रतद्धर्मवतिउपाधिव्यभिचारेणसाध्यव्य
भिचारानुमानम् यथासश्यामो मित्रातनयत्वादित्यादौ मित्रातनयत्वंश्यामत्वव्यभिचारिमित्रातनयेशाकपाकजत्वव्य
भिचारित्वादिति वाधानुन्नीतपक्षेतरस्तुसाध्यव्यापकताग्राहकप्रमाणाभावात् स्वव्याघातकत्वाच्चनोपाधिः॥ ९॥

त्रित्वेनवायुःप्रत्यक्षःप्रमेयत्वादित्यादौतुप्रमेयत्वम्प्रत्यक्षत्वव्यभिचारिवहिर्द्रव्येउद्भूतरूपव्यभिचारित्वादित्यादिद्रष्टव्यम् ननुपक्षेतर
त्वेतिव्याप्तिःनचतस्यलक्ष्यत्वमेव।एकाश्रयेयेषामित्यादिमूलेनप्रदर्शितस्यलक्ष्यतावच्छेदकस्यतत्राभावात् तत्रहेतौ।पक्षेतरत्वव्य।
भिचारस्यपक्षमादायैवसम्भवात्साध्यव्यभिचारस्यतमादायासम्भवादतआह। वाधानुन्नीतेति। स्वव्याघातकत्वादिति।उपाधिमा
॥ त्रस्यदूषकत्वव्याघातकत्वादित्यर्थः।पक्षेतरत्वस्योपाधित्वेसर्वत्रानुमानेपक्षेतरत्वस्योपाधेःसम्भवादनुमान॥

का॰मु॰ मावोच्छेदापत्त्या व्यभिचारानुमानाधीनस्योपाधेर्दूषकत्वस्यासम्भवादिति भावः ॥ ७ ॥ ननु तथापि यत्र साध्यव्यापकताग्राहकम्प्रमाणम
टि॰ स्ति तत्र पक्षेतरत्वे लक्षणातिव्याप्तिर्दुर्वारेत्यत आह बाधोन्नीतस्त्विति बाधेन पक्षे साध्याभाववत्तया उन्नीतः साध्यव्यापकत्वेन निश्चित इ
२९७ त्यर्थः। संदिग्धोपाधिरपीति। पक्षे साध्यसन्देहेन साध्यव्यापकतासन्देहस्य पक्षेतरत्वे सम्भवादिति भावः। नच स्वव्याघातकत्वेनानुपाधित्वादे
वानुद्भावनं संभवे सम्प्रदायमात्रेण तद्दूषकत्वकथनमसङ्गतमिति वाच्यम् यत्र साध्यव्यापकताग्राहकतर्कावतारस्तत्र व्यापकव्यभिचारिणो।

बाधोन्नीतस्तु उपाधिर्भवत्येव यथा वह्निरनुष्णः कृतकत्वादित्यादौ प्रत्यक्षेण वह्नावुष्णत्वग्रहे वह्नीतरत्वमुपाधिः। य
त्र तूपाधेः साध्यव्यापकता संदिह्यते स संदिग्धोपाधिः पक्षेतरस्तु संदिग्धोपाधिरपि नोद्भावनीयः कथकसम्प्रदायानुरो-
धात् केचित्तु सत्प्रतिपक्षोत्थापनमुपाधेः फलन्तथाहि अयोगोलकन्धूमवद्वह्नेरित्यादौ अयोगोलकन्धूमाभाववा-
त् आर्द्रेन्धनाभावादिति सत्प्रतिपक्षसम्भवात् इत्यत्र साधनव्यापकोपि कश्चिदुपाधिः यथा करकापृथिवी कठिनसं-

॥ शब्दोपमानयोर्नैव पृथक्प्रामाण्यमिष्यते १४० अनुमानगतार्थत्वादिति वैशेषिकं मतम् ॥

योगवत्त्वादित्यादौ अनुष्णाशीतस्पर्शवत्त्वम् नचात्र स्वरूपासिद्धिरेव दूषणमिति वाच्यम् सर्वत्रोपाधेर्दूषणान्तरसाङ्क-
र्यात् अत्र च साध्यव्यापकः पक्षावृत्तिरुपाधिरिति वदन्ति शब्दोपमानयोरिति वैशेषिकाणां मते प्रत्यक्षमनुमानञ्च
प्रमाणम् शब्दोपमानयोस्तु अनुमानविधयैव प्रामाण्यम् तथाहि दण्डेन गामानयेत्यादि लौकिकपदानि वैदिकपदानि वा॥

व्याप्यव्यभिचारावश्यम्भावेन व्यभिचारानुमापकत्वरूपस्य दूषकत्वस्य व्याघातासम्भवात् सत्प्रतिपक्षोन्नायकत्वेनोपाधेर्दूषकतावादिना।
म्मत आह केचित्त्विति इत्यत्रेति सत्प्रतिपक्षोत्थापकतया दूषकत्वे चेत्यर्थः अत्र च सत्प्रतिपक्षोत्थापकत्वपक्षे च पक्षावृत्तिरिति पक्षवृत्तित्वे राम॰
नुपक्षे तदभावेन साध्याभावासाधनादिति भावः। गुरुमते लौकिकः शब्दोऽनुवादकः वैदिक एव प्रमाणन्तन्मतनिराकरणायाह वैदिकेति॥ अ २९७
त्र स्वर्गकामो यजेतेत्यादिपदत्वेन पक्षता तेन विशेषतः संसर्गसिद्धिरिति द्रष्टव्यम् ॥ श्रीः ॥ श्रीः ॥

तात्पर्यविषयेति अत्र ब्राह्मणेन विद्येत्यादौ यद्वाधिकरणत्वं संसर्गे तात्पर्येऽन्तद्विषयत्वादिसंसर्गेणार्थान्तरवारणाय तात्पर्यविषयत्वं संसर्गविशेषणं तात्पर्यं ज्ञानेऽन्तरपदार्थेनेतरपदार्थस्य प्रवेशाद्धटत्वादिना स्मृतस्य संसर्गो न सिद्ध्येदतः स्मारितेति स्मारितत्वञ्च वृत्त्या बोध्यम् तेन वस्तुघटादेः समवायेनाकाशत्वादिनोपस्थापितेन रूपेण संसर्गसिद्ध्यभावेऽपि न क्षतिः। हेतौ चायमेति पुत्रो राज्ञः पुरुषोपसार्यतामित्यादौ राज्ञः पुरुषइत्यादिभागे राजपुरुषयोर्योग्यार्थयोः संसर्गे तात्पर्याभावेन साध्याभावाद्व्यभिचार इत्याकाङ्क्षाविशेषणं ज्ञेयमदमनेन पदेन सहामुकसंसर्गेण तदर्थान्वितस्वार्थबोधजनकत्वमिति पदतात्पर्यार्थकम् तेन नाकाङ्क्षायामितरांशवैयर्थ्यप्रसङ्गः। वह्निना [illegible] त्यादिवाक्यसंसर्गप्रमापूर्वकत्वसाध्याभावेन व्यभिचारवारणाय हेतौ योग्यतापदम् नीलो घटो द्रव्यम्पट इत्यादिनीलः पट इत्यादिभागे नीलपटयोराकाङ्क्षायोग्य

तात्पर्यविषयस्मारितपदार्थसंसर्गप्रमापूर्वकाणि आकाङ्क्षादिमत्पदकदम्बकत्वात् घटमानयेति पदकदम्बकवत् यद्वा एते पदार्था मिथः संसर्गवन्तः योग्यतादिमत्पदोपस्थापितत्वात् तादृशपदार्थवद् दृष्टान्तेऽपि दृष्टान्तान्तरेण साध्यसिद्धिः। रिति एवङ्गवयव्यक्तिप्रत्यक्षानन्तरङ्गवयपदङ्गवयत्वप्रवृत्तिनिमित्तकम् असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात् असति वृत्त्यन्तरे वृद्धैर्यत्र यत्प्रयुज्यते तत्र तत्तत्प्रवृत्तिनिमित्तकं यथा गोपदं गोत्वप्रवृत्तिनिमित्तकम् यद्वा गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वादित्यनुमानेन पक्षधर्मताबलाद्गवयत्वप्रवृत्तिनिमित्तकत्वं सिध्यति ॥ ६ ॥

तासत्त्वेन हेतुमत्त्वाद्व्यभिचारवारणायासत्तिपदम्। कदम्बपदन्त्वाकाङ्क्षादीनाम्परस्परप्रतियोगित्वलाभाय अन्यथा साध्यस्य परस्परार्थघटितत्वेन व्यभिचारप्रसङ्गात् नन्विष्टतावच्छेदकप्रकारकप्रवृत्तिविशेष्यकज्ञानस्य प्रवर्त्तकतया संसर्गज्ञानपूर्वकत्वानुमितेरनादृशतया कथं प्रवर्त्तकत्वम्। अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमेन प्रमापूर्वकत्वत्वेन प्रमापूर्वकत्वसिद्धावपि पुरोवर्त्तिविशेष्यकस्य जनत्वादिप्रकारकज्ञानस्य तस्मादनुत्पत्तेस्तदर्थं शब्दप्रामाण्यस्वीकार इत्यत आह यद्वेति मिथः संसर्गइति। तात्पर्यविषयापरस्परसंसर्गवन्त इत्यर्थः। तेन नानात्पर्यविषयसंसर्गमादायार्थान्तरम् ननु दृष्टान्ते साध्यसिद्ध्यभावात्कथम्व्याप्तिग्रह इत्यत आह दृष्टान्तेऽपी

किन्त्वेति पदज्ञानङ्कल्पयित्वेति पद

का॰ मु॰ ननु सर्वत्र शब्दश्रवणानन्तरमनुमितिरूपकार्यान्यथानुपपत्त्या व्याप्तिज्ञानङ्कल्पनीयमित्यत आह किन्त्वेति पदज्ञानङ्कल्पयित्वेति पद
टि॰ स्मरणङ्कल्पयित्वेत्यर्थः वन्ह्यादिशब्देनार्थस्यैव वन्ह्यादिरूपेणार्थैर्वापि वन्ह्यादिपदस्मरणसम्भवाद्वाच्यत्वादिवद्वाचकत्वादिसम्बन्धस्या
२१८ पि स्मारकत्वादिति भावः। इदमुपलक्षणम् आकाङ्क्षादिज्ञानङ्कल्पयित्वेत्यपि बोध्यम् मणिकृतस्त्वेते पदार्थाः परस्परसंसर्गवन्तः योग्य
तादिमत्पदोपस्थापितत्वादित्यनुमाने योग्यतानलिंगविशेषणम् लिङ्गस्य निश्चितस्यैव निश्चायकतया योग्यतायाश्च संशयेऽपि शाब्दबोधद-
र्शनादतः पृथगेव शब्दो मा-

नमिति वदन्ति मिश्रास्त्वनुमानमुद्रया शब्दस्य बोधकत्वे घटमानयेति स्वरूपयोग्यम् घटः कर्मत्वमानयनङ्कृतिरिति स्वरूपायोग्यमिति न स्यात्
अनुमानस्योभयत्रापि सम्भवात् न चाकाङ्क्षाघटितहेत्वभावान्नानुमितिस्तत्रेति वाच्यम् आकाङ्क्षाभ्रमेणानुमितिसम्भवात् विषयावाधाच्च
तस्याः प्रमात्वात् शब्दप्रामाण्ये च सम्भावात्तत्तादृशशब्दस्य बोधकत्वमित्याहुः। परे तु घटात्पृथगित्यादौ घटावधिकपृथक्त्वप्रकारेण निरवच्छि राम॰
न्नविशेष्यताकः पृथक्त्वाश्रयस्य शाब्दबोधः सर्वानुभवसिद्धः स चास्माकन्तादृशानुपूर्वीकपदज्ञानत्वेन तादृशशाब्दबोधम्प्रति हेतुत्वादुप २१८
पद्यते वैशेषिकाणान्तु पृथक्त्वं घटावधिकं घटपदसाकाङ्क्षपृथक्पदस्मारितत्वादित्यनुमानेन तन्निर्वाहः पक्षविधयापृथक्त्व॥ ॥

तन्मतन्दूषयति। तत्त्वसम्यगिति व्याप्तिज्ञानं विनापि शब्दादितो बोधस्यानुभवसिद्धत्वात् न हि सर्वत्र शब्दश्रवणानन्तरम्व्या
प्तिज्ञाने प्रमाणमस्तीति किन्त्वसर्वत्र शब्दस्थले यदि व्याप्तिज्ञानङ्कल्प्यते तदा सर्वत्रानुमितिस्थले पदज्ञानं कल्पयित्वा शाब्द
बोध एव किन्नस्वीक्रियतामिति ध्येयम् १३९।१४०।१४१ त्रैविध्यमिति अनुमानं हि त्रिविधं
केवलान्वयि केवलव्यतिरेकि अन्वयव्यतिरेकि भेदात् तत्रासद्विपक्षः केवलान्वयि॥ ॥

तत्त्वसम्यग्विना व्याप्तिबोधः शब्दादिबोधतः १४१ त्रैविध्यमनुमानस्य केवलान्वयिभेदतः। द्वैविध्यन्तु भ
वेद्व्याप्तिरन्वयव्यतिरेकतः १४२ अन्वयव्याप्तिरुक्तैव व्यतिरेकादिहोच्यते। साध्याभावव्यापकत्वं हेत्वभाव
स्य यद्भवेत् १४३॥

स्यभानेऽपि तदाश्रयस्य भानात् नच पटम्यसीकृत्य पटो घटावधिकपृथक्त्ववानित्यनुमित्या तन्निर्वाहः इति वाच्यम् पटादिनिष्ठविशेष्यतायास्तत्र पक्षतावच्छेदकीभूतपटत्वावच्छिन्नतया निरवच्छिन्नविशेष्यताकतादृशशाब्दबोधसमानाकारकत्वस्य तयाप्यनिर्वाहादित्यादुर्विभाव्यं दिक् ॥ २३९ ॥ २४० ॥ २४१ ॥ तत्र तेषु मध्ये असद्विपक्षः इति अत्यन्ताभावाप्रतियोगिसाध्यः इत्यर्थः ॥ यथाश्रुते सिद्धासिद्धिव्याघातात् अत्यन्ताभावाप्रतियोगित्वस्य च प्रमेयत्वादौ सत्त्वाल्लक्षणसमन्वयः न चैतन्न सम्भवति प्रमाविषयत्वरूपस्य तस्य नानात्वे

यथा घटोऽभिधेयः प्रमेयत्वादित्यादौ तत्र हि सर्वस्यैवाभिधेयत्वाद्विपक्षासत्त्वम् असत्सपक्षः केवलव्यतिरेकी यथा पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ तत्र हि जलादित्रयोदशभेदस्य पूर्वमनिश्चिततया। निश्चितसाध्यवतः सपक्षस्याभावात् सत्सपक्षविपक्षोऽन्वयव्यतिरेकी यथा वह्निमान् धूमादित्यादौ तत्र सपक्षस्य महानसादेर्विपक्षस्य जलह्रदादेश्च सत्त्वादिति तत्र हि व्यतिरेकिणि व्यतिरेकव्याप्तिज्ञानं कारणं तद्यथा व्यतिरेकव्याप्तिं निर्वक्ति साध्याभावेति साध्याभावव्यापकीभूताभावप्रतियोगित्वमित्यर्थः अत्रेदं बोध्यम् यत्सम्बन्धेन यदवच्छिन्नं प्रतियेन सम्बन्धेन येन रूपेण व्यापकता गृह्यते तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभावज्ञानात् तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभावस्य सिद्धिरिति ॥ ९ ॥

नानुगमादिति वाच्यम् प्रमात्वस्यैव परम्परासम्बन्धेनानुगन्तव्यत्वात् इत्यञ्च प्रमेयत्वादेर्व्यतिरेकित्वम् अत्र मेऽपि केवलान्वयित्वमेवेति। मन्तव्यम् असत्सपक्षः इति सिद्धासिद्धिव्याघातादत्राप्यगृहीतहेतुसहचारं यद्व्यतिरेकिसाध्यन्तत्कत्वमर्थो बोध्यः सत्सपक्षेति गृहीतान्वयव्यतिरेकिसाध्यकमित्यर्थः यत्सम्बन्धेन यदवच्छिन्नं प्रतीति यत्सम्बन्धावच्छिन्नयद्रूपावच्छिन्नव्याप्यतानिरूपितव्यापकता गृह्यते इत्यर्थः ॥ ~ ॥

का.मु. इतरव्याप्यतेति इतरस्यव्याप्यतेत्यर्थः तादात्म्येनेतरव्यापकतेति पाठे तादात्म्यसम्बन्धावच्छिन्नायेतरनिष्ठव्याप्यतातन्निरूपितव्यापकतेत्यर्थः
दि. तादात्म्यसम्बन्धेनेति तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिकाभावः सिद्ध्यतीत्यर्थः। येनसम्बन्धेनव्याप्यतागृह्यते इत्यनुक्तौ तु तादात्म्येनेतर
२९९ स्यव्याप्यता यत्र गृहीता तत्रेतरान्योन्याभावस्यसिद्धिःस्यादितिभावः। संयोगसंबन्धावच्छिन्न प्रतियोगिताकवह्न्यभावेनेति सावधारणम् ते
नसम्बन्धान्तरावच्छिन्नप्रतियोगिताकेन न तत्सिद्धिरित्यर्थः अनेन च येनसम्बन्धेनव्यापकतागृह्यते इत्यस्य फलं सूचितम् प्रदर्शितरी
त्यैव येनरूपेणयदवच्छिन्नेत्यनयोरपिप्रयोजनमूह्यम् ननु साध्यसाधनसहचारज्ञानाभावात्कथंव्यतिरेकव्याप्तिज्ञानमित्य
तआह अत्रचेति तथाचव्यतिरेकसहचारेणैव व्यतिरेकव्याप्तिग्रहान्नान्वयसहचारग्रहापेक्षेतिभावः। ननुसाध्यप्रसिद्धिं विनातदा

इत्यञ्च यत्र विशेषणतासम्बन्धेनेतरत्वव्यापकत्वङ्गन्धात्यन्ताभावे गृह्यते तत्र गन्धाभावाभावेनेतरत्वात्यन्ता
भावः सिद्ध्यति यत्र तु तादात्म्यसम्बन्धेनेतरव्यापकत्वङ्गन्धाभावस्य गृह्यते तत्र तादात्म्यसम्बन्धेनेतरस्याभा
वः सिद्ध्यति स एवान्योन्याभावः एवं यत्र संयोगसम्बन्धेन धूमम्प्रति संयोगसम्बन्धेन वह्नेर्व्यापकता गृह्य
ते तत्र संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावेन जलह्रदे संयोगसम्बन्धावच्छिन्नप्रतियोगिताक
धूमाभावः सिद्ध्यति अत्र च व्यतिरेकव्याप्तिग्रहे व्यतिरेकसहचारज्ञानङ्कारणम् ॥ ॥

भावाज्ञाने व्यतिरेकव्याप्तेर्दुर्ग्रहत्वं स्यात् साध्यसिद्धौ च सिद्धसाधनमिति चेन्न साध्यस्य घटादावेव प्रत्यक्षसिद्धत्वात्पृथिवीतरभिन्ने
त्युद्देश्यप्रतीतेरसिद्धत्वान्न सिद्धसाधनम् पक्षतावच्छेदकनानात्व एवांशतः सिद्धसाधनस्य दोषत्वात् अत एवानित्यैवाङ्मनसे इत्यत्र
वागनित्युद्देश्याया अनित्यत्वस्य सिद्धत्वेनांशतः सिद्धसाधनमिति ननु तथापि घटः कथं पक्षः साध्यस्य निश्चयेन तत्संदेहसिषाधयि ताम
षयोरभावादिति चेन्न यतः सर्वा पृथिवीतरभिन्ना न वेति संशयस्य तत्प्रकारकसिषाधयिषायाश्च घटविषयत्वाद्घटत्वेन विशेषदर्शनेसि २९९
द्धौ वा तेन रूपेण संशयसिषाधयिषे न भवतः पृथिवीत्वेन तु भवत एवेति॥ श्रीः ॥ श्रीः ॥ श्रीः ॥ श्रीः ॥ श्रीः ॥ ॥ ॐ

ननु पृथिवीतरभिन्ना पृथिवीत्वात् घटवदित्यन्वयिनैवेतरभेदसिद्धौ व्यतिरेकिवैयर्थ्यमिति चेन्न अन्वयव्याप्तेरग्रहे व्यतिरेकव्याप्तिस्फूर्त्तिद शायां व्यतिरेक्यनुमितिजननसंभवेन व्यतिरेक्यनुमानप्रवृत्तेर्निष्प्रत्यूहत्वात् आचार्यमतमाह केचित्त्विति व्यतिरेकसहचारेण अन्वयसहचा रनिरपेक्ष व्यतिरेकसहचारेण अन्वयव्याप्तिरेवेत्येवकारेण व्यतिरेकव्याप्तेर्व्युदासः नन्वेवं व्यतिरेकव्याप्तिज्ञानरूपकारणाभावात्कथं व्यतिरेक्यनुमितिरत आह नत्विति व्यतिरेकव्याप्तिज्ञानमित्यस्यानुमितावित्यादिः। नन्वन्वयव्याप्तिज्ञानस्यैव हेतुत्वे कथं व्यतिरेकीति व्यवहा र इत्यत आह यत्रेति ननु पृथिवीतरेभ्यो भिद्यते पृथिवीत्वादित्यादौ साध्यस्येतरभेदादेरप्रसिद्धत्वात्कथमन्व्यतिरेकसहचारग्रह इत्यत आह

केचित्तु व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते न तु व्यतिरेकव्याप्तिज्ञानमपि कारणम् यत्र व्यतिरेकसहचाराद्व्याप्ति ग्रहस्तत्र व्यतिरेकीत्युच्यते साध्यप्रसिद्धिस्तु घटादावेव जाता पश्चात्पृथिवीत्वावच्छेदेन साध्यत इति वदन्ति १४३।१४४॥ अर्थापत्तिरिति अर्थापत्तिः प्रमाणांतरमिति केचिन्मन्यंते। तथाहि। यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशास्त्रादवग

॥ अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते। व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः १४४॥

तं जीविनो गृहासत्त्वं च प्रत्यक्षादवगतं तत्र शतवर्षजीविनो गृहासत्त्वं बहिः सत्त्वं विनाऽनुपपन्नमिति बहिः सत्त्वं कल्प्य त इति तदप्यनुमानेन गतार्थत्वान्नेष्यते तथाहि यत्र जीवित्वस्य बहिः सत्त्वगृहसत्त्वान्यतरव्याप्यत्वं गृहीतं तत्र चान्यतर सिद्धौ जायमानायां गृहसत्त्वबाधाद्बहिः सत्त्वमनुमितौ भासते॥ ॥ ॐ ॥ साध्यप्रसिद्धिस्त्विति ननु घटादौ साध्ये निर्णीते क

थं तत्रेतरभेदानुमितिरत आह पश्चादिति अवच्छेदकावच्छेदेनानुमितौ सामानाधिकरण्येन साध्यसिद्धेरप्रतिबन्धकत्वादिति भावः। अ त्र चान्वयव्याप्तिघटकतावत्पदार्थज्ञानादेवान्वयव्याप्तिज्ञानोत्पत्तौ व्यतिरेकसहचारज्ञानस्य तद्धेतुत्वे मानाभावः। न च व्यतिरेकसहचारे णोत्पत्त्यप्रयोजकत्वं तृतीयार्थः तच्च नानुपपन्नम् अन्वयव्याप्तिज्ञाने प्रतिबन्धकव्यभिचारशङ्कानिरासद्वारा व्यतिरेकसहचारज्ञानस्य त त्प्रयोजकत्वादिति वाच्यम् व्यतिरेकसहचारग्रहेऽप्यधिकरणान्तरे व्यभिचारशङ्कानादवस्थ्यात् तदधिकरणीयव्यभिचारशङ्कानिरासद्वा

तदधिकरणेसाधनाभावग्रहमात्रेणैवतदधिकरणीयव्यभिचारशङ्कानिवृत्तेरित्यस्वरसोवदन्तीत्यनेनसूचितः १४२।१४३ केचन्मीमांसकाः
तदपि। अर्थापत्तेः प्रमाणान्तरत्वमपि दिवानभुङ्क्ते इत्यादावित्यादिना मयूरः पर्वतेतरस्मिन्ननृत्यतिनृत्यति चेत्यस्यसंग्रहः नन्वेतद्वाक्यान्मयूरः
पर्वतेनृत्यतीतिज्ञानमुत्पद्यते नन्वेतद्व्यतिरेकिणः सम्भवति पर्वतनृत्यस्य साध्यस्याप्रसिद्धौ व्यतिरेकव्याप्त्यनिरूपणादितिकथन्त्वार्थो

एवम्पीनोदेवदत्तोदिवानभुङ्क्ते इत्यादौपीनत्वस्यभोजनव्याप्यत्वावगमाद्भोजनसिद्धौदिवाभोजनबाधेरात्रिभोजनंसि
ध्यतीति अभावप्रत्यक्षस्यानुभाविकत्वादनुपलम्भोपिनप्रमाणान्तरम् किञ्चानुपलम्भस्याज्ञातस्यहेतुत्वेज्ञानाकरणत्वात्।
प्रत्यक्षम् ज्ञातस्यहेतुत्वेतु तत्राप्यनुपलम्भान्तरापेक्षेत्यनवस्था एवञ्चचेष्टापिनप्रमाणान्तरन्तस्याःसङ्केतग्राहकशब्द
स्मारकत्वेनलिप्यादिसमशीलत्वाच्छब्द एवान्तर्भावात् यत्रचव्याप्त्यादिग्रहस्तत्रानुमितिरेवेति १४४ सुखन्निरूपयति

सुखंहिजगतामेकंकाम्यन्धर्मेणजायते।अधर्मजन्यन्दुःखंस्यात्प्रतिकूलंसचेतसाम् १४५ निर्दुःखत्वेसु।
खेचेच्छा तज्ज्ञानादेवजायते इच्छातुतदुपायेस्यादिष्टोपायत्वधीर्यदि १४६॥ ९।सुखमिति काम्यमभिलाष
विषयः धर्मेणेति धर्मत्वेनसुखत्वेनकार्यकारणभावइत्यर्थः।दुःखन्निरूपयति।अधर्मेति अधर्मत्वेनदुःखत्वेनकार्य
कारणभावइत्यर्थः प्रतिकूलमिति।दुःखतज्ज्ञानादेवसर्वेषांस्वाभाविकद्वेषविषयइत्यर्थः १४५ इच्छान्निरूपयति निर्दुः
खत्वइति इच्छाद्विविधा।फलविषयिणीउपायविषयिणीच फलन्तुसुखंदुःखाभावश्चतत्रफलेच्छांप्रतिफलज्ञानङ्कार

पत्तिः प्रमाणान्तरमितिचेन्न मयूरनृत्यम्पर्वताधिकरणकम्पर्वतेतरानधिकरणत्वेसतिसाधिकरणत्वात्पर्वतत्ववदित्यन्वयव्यतिरेकि
णैवपर्वताधिकरणकमयूरनृत्यज्ञानसम्भवात् १४४ धर्मत्वेनेति इदन्त्वप्राचाम्मतेनोक्तम् नवीनमतेतु नित्यंविज्ञानमानन्दम्ब्रह्मेति।
श्रुत्याभगवतिनित्यसुखसिद्धौधर्मस्यकार्यतावच्छेदकञ्जन्यसुखत्वम् सुखत्वावान्तरजातिर्वेतिबोध्यम् १४५ तत्रतयोर्मध्ये ॥ ७ ॥

अतएव फलज्ञानस्य फलेच्छाम्प्रति हेतुत्वादेव। पुरुषार्थः सम्भवतीति। सुखदुःखाभावश्च पुरुषार्थः सम्भवतीत्यर्थः। ननु यद्ज्ञानमित्यादेः स्व
विषयकज्ञानजन्येच्छाविषयत्वमर्थः तथा चोपायेऽतिव्याप्तिस्तस्यापि स्वविषयकेष्टसाधनताज्ञानजन्येच्छाविषयत्वादत आह इतरेच्छेति १४६
क्रुतिसाध्यताज्ञानमिति ननु कृतिसाध्यताज्ञानस्य स्वातन्त्र्येण चिकीर्षाम्प्रति हेतुत्वे मानाभावः तद्धर्मावच्छिन्नविशेष्यकेष्टसाधनताज्ञानस्य तद्
मेप्रकारकेच्छाम्प्रति हेतुतायाः क्लृप्तत्वात् कृतिसाध्यपाकत्वावच्छिन्नविशेष्यकेष्टसाधनताज्ञानादेव चिकीर्षायाः सम्भवादिति चेन्न यत्र
कृतिसाध्यपाकत्वेनेष्टसाधनत्वन्न गृहीतमपि तु सुदुपाकत्वेन कृतिसाध्यत्वं सुदुपाकत्वेन चेष्टसाधनत्वङ्गृहीतन्तत्रापि पाकगोचरप्रवृत्तेरा
नुभाविकतया तदनुरोधेन चिकीर्षाया अप्यावश्यकत्वेन तन्निर्वाहाय कृतिसाध्यताज्ञानस्य स्वातन्त्र्येण हेतुताया आवश्यकत्वात् अथ कृ

अतएव पुरुषार्थः सम्भवति यज्ज्ञातं सत् स्ववृत्तितयेष्यते स पुरुषार्थ इति तल्लक्षणात् इतरेच्छानधीनेच्छाविषय
त्वम्फलितोऽर्थः उपायेच्छाम्प्रतीष्टसाधनताज्ञानङ्कारणम् चिकीर्षेति १४६ कृतिसाध्यत्वप्रकारिका कृतिसाध्यत्रि

॥ चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा तु या भवेत्। तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत् १४७॥

याविषयिणीच्छा चिकीर्षा पाकं कृत्या साधयामीति तदनुभवात् चिकीर्षाम्प्रति कृतिसाध्यताज्ञानमिष्टसाधनताज्ञान
((ञ्च कारणम् तद्धेतुरिति॥ ६॥

त्यसाध्यताज्ञानस्य प्रतिबन्धकत्वादेव वृष्ट्यादौ चिकीर्षानुत्पादात् कृतिसाध्यताज्ञानस्य चिकीर्षाम्प्रति
हेतुत्वे मानाभाव इति चेन्न कृतिसाध्यत्वाभाववद्व्याप्यतदवच्छेदकधर्मज्ञानानाम्प्रतिबन्धकत्वकल्पनापेक्षया कृतिसाध्यताज्ञानस्य हेतुत्वे
लाघवात् इष्टसाधनताज्ञानमिति। अन्यथा निष्फलत्वज्ञानेऽपि चैत्यवन्दनादौ चिकीर्षापत्तिरिति भावः। अत्रेदम्बोध्यम् पाकविशेष्यकेष्ट
साधनताज्ञानस्य कार्यतावच्छेदकन्न पाकादिगोचरचिकीर्षात्वङ् कृतिसाध्यत्वप्रकारकत्वनिवेशे प्रयोजनविरहात् पाकोऽजायतामितीच्छा
या अप्रसङ्गात् पाकत्वेच्छा किन्तु पाकत्वावच्छिन्नमुख्यवि॥ श्रीः॥ श्रीः॥ श्रीः॥ श्रीः॥ श्रीः॥ छ॥ छ॥ ६॥ छ॥ ६॥ श्रीः॥

का॰मु॰ शेषके च्छात्वम्याकसाध्यंसुखंजायतामितीच्छायाम्व्यभिचारवारणायसुखेति दुष्टसाधनतेत्यत्रेच्छास्वरूपसतीविशेषणम् तेनेच्छाज्ञान
टि॰ शून्यकालेपिचिकीर्षानिरासः। अतएवकृतिसाध्यताज्ञानस्यहेतुत्वादेव १४७ वलवद्विष्टेति द्विष्टन्द्वेषविषयीभूतन्द्वेषश्चदुःखेनादृष्टेन
२२१ ज्ञानात् सर्पादौतत्साधनताज्ञानात् द्वेषेवलवत्त्वञ्जातिविशेषः प्रतिवन्धकमिति ननुवलवद्द्वेषविषयसाधनत्वज्ञानस्यप्रतिवन्धकत्वेवै
त्रस्यागम्यागमनजन्यनरकेयदावलवान्द्वेषस्तदामैत्रस्यतादृशद्वेषशून्यस्यागम्यागमनेनादृशनरकसाधनत्वज्ञानवतइच्छाप्रवृत्त्योरनुप-
पत्तिः एवञ्चैत्रस्यैवकालान्तरेतादृशद्वेषसत्त्वेपि नचतत्कालीनतत्पुरुषीयेच्छाम्प्रतिप्रवृत्तिम्प्रतिचतत्कालीनतत्पुरुषीयवलवद्विष्टजन-
कत्वज्ञानस्यप्रतिवन्धकत्वङ्कल्प्यते यत्पुरुषस्ययदानकापिद्वेषस्तत्कालतत्पुरुषान्तर्भावेनतादृशज्ञानप्रतिवन्धकत्वस्याकल्पनान्नतत्रता-

अतएवतृप्त्यादौकृतिसाध्यताज्ञानाभावान्नचिकीर्षा १४७ वलवद्विष्टेति वलवद्विष्टसाधनताज्ञानंतत्रप्रतिव-

॥ वलवद्विष्टहेतुत्वमतिः स्यात्प्रतिवन्धिका । तदहेतुत्ववुद्धेस्तुहेतुत्वङ्कस्यचिन्मते ।१४८॥

न्धकमतोमधुविषसम्पृक्तान्नभोजनेनचिकीर्षा वलवद्द्वेषः प्रतिवन्धकइत्यन्ये तदहेतुत्वेति॥ ॥

दृशप्रतिवन्धकाप्रसिद्ध्यातदभावरूपकारणस्याभावात्प्रवृत्त्यनुपपत्तिरितिवाच्यम् यत्पुरुषस्ययदागम्यागमनजन्यनरकेवलवद्द्वेष-
स्तदानत्पुरुषस्यतत्रेच्छानुत्पादादगम्यागमनगोचरतत्पुरुषीयतत्कालीनेच्छायाअप्रसिद्ध्यातत्पुरुषतत्कालान्तर्भावेनतादृशकार्यका-
रणभावस्याभावेनतत्रतत्पुरुषीयागम्यागमनगोचरेच्छानुत्पादप्रयोजकस्यदुर्भिक्षापत्तेरितिचेन्न तद्धर्मप्रकारकद्वेषविशिष्टस्यतद्धर्माव-
च्छिन्नजनकत्वज्ञानस्यतत्रप्रतिवन्धकत्वकल्पनेनोक्तापत्त्यभावात्तद्धर्मप्रकारकद्वेषानुत्तरतादृशेच्छायान्तादृशद्वेषाभावस्तादृशद्वेषोत्त- राम
रतद्गोचरेच्छायान्तद्धर्मावच्छिन्नजनकत्वज्ञानाभावःकारणम् वलवद्द्वेषइति पाकादिगोचरेच्छायांवलवद्द्वेषविषयसाधनत्वज्ञानज- २२१
न्यः पाकगोचरोद्वेषः प्रतिवन्धकः पूर्वोक्तप्रतिवन्धकद्वयकल्पनापेक्षयालाघवादितिभावः॥ श्रीः॥ श्रीः॥ ॥ ॥

यत्र चोत्कटसुखोत्कटदुःखजनकत्वमेकस्मिन्कर्मणि गृहीतन्तत्र सम्प्रतिपन्नस्थले इच्छाद्वेषयोरनुत्पन्ने स्तम्मते तत्र कार्यकाले द्वेषाभावस्य स
त्वेनेच्छोत्पादापत्तिः। नच यत्र बलवदिष्टसाधनत्वज्ञानेन तृतीयक्षणे द्वेषो जनित —————— स्तदुत्तरक्षणे इच्छोत्पादापत्तिस्तत्रापीति
वाच्यम् तत्रेच्छोत्पादस्येष्टत्वात् क्षणविलम्बस्य शपथनिर्णेयत्वादित्यन्ये इत्यनेनास्वरसः सूचितः ॥ ७ ॥ बलवदनिष्टाजनकत्वज्ञानमिति अत्रापि
तद्धर्मप्रकारकद्वेषोत्तरेच्छायान्तद्धर्मावच्छिन्नाजनकत्वज्ञानङ्कारणम् तादृशद्वेषानुत्तरेच्छायान्तु तद्धर्मप्रकारकद्वेषाभावः कारणमिति निष्कर्षो
बोध्यः मूले कस्यचिन्मते इत्यनेनास्वरसः सूचितः नच बलवदनिष्टाननुबन्धित्वज्ञानत्वस्य हेतुतावच्छेदकत्वे बलवदनिष्टजनकत्वप्रकारतानिरू
पिताभावविशेष्यताशालित्वादेस्तादृशनिरूप्यनिरूपकभावघटितत्वेन गौरवात्तद्घटितबलवदनिष्टसाधनत्वज्ञानाभावत्वेनैव हेतुत्वं युक्तम्

बलवदनिष्टाजनकत्वज्ञानङ्कारणमित्यर्थः १४८ द्वेषन्निरूपयति। द्विष्टेति। दुःखोपायविषयकं द्वेषं प्रतिबलव

॥ द्विष्टसाधनताबुद्धिर्भवेद्द्वेषस्यकारणम्। प्रवृत्तिश्च निवृत्तिश्च तथाजीवनकारणम् १४९ ॥

द्विष्टसाधनताज्ञानङ्कारणमित्यर्थः। बलवदिष्टसाधनताज्ञानम्प्रतिबन्धकन्तेन नान्तरीयकदुःखजनके पाकादौ।
॥ नद्वेषः। प्रयत्नन्निरूपयति। प्रवृत्तिरिति १४९

नचाप्रामाण्यज्ञानानास्कन्दितबलवदनिष्टाननुबन्धित्वज्ञानत्वापेक्षया अप्रामाण्य
निश्चयानास्कन्दिततदनुबन्धित्वज्ञानत्वस्य प्रतिबन्धकतावच्छेदकत्वे गौरवमिति वाच्यम् युद्धादौ बलवदनिष्टसाधनत्वसन्देहेपीच्छा।
प्रवृत्त्योरुदयाद्बलवदनिष्टाप्रतिबन्धित्वनिश्चयस्यैवेच्छाप्रतिबन्धकतायास्तदननुबन्धित्वसंशयस्यापि च कारणतायाश्च वाच्यतया च विप
रीतगौरवादिति नच बलवदनिष्टाननुबन्धिज्ञानस्याप्रवर्त्तकत्वे तद्विषयस्य विध्यर्थत्वाभावात् कलञ्जम्भक्षयेदित्यादिवाक्यानामप्रामा
ण्यापत्तिरिति वाच्यम् तज्ज्ञानस्य प्रवृत्तिजनकत्वाभावेपि प्रवृत्तिप्रतिबन्धकबलवदनिष्टसाधनत्वज्ञानविघटकत्वेन प्रवृत्तिप्रयोजकत्वात्
॥ प्रवृत्तिप्रयोजकज्ञानविषयस्य विध्यर्थत्वानपायात् ॥

रा०॥ ननु प्रतियोगितया ध्वंसं प्रति समवायेन स्वतः कारणत्वे गगनादीनां तदापत्तिरित्याशंकामपनेतुं तादात्म्येन सतः कारणतां ग्राहयति यत्रेति न चैतादृश
कार्यकारणभावानंगीकारे सामान्यादौ ध्वंसापत्तिरेव दूषणं एतादृशकार्यकारणभावस्वीकारेपि गगनादौ तदापत्तिरशक्यपरिहारैवेति वाच्यम् का
लिकसमवायोभयसंबंधस्यैव कारणतावच्छेदकताघटकत्वादिति भावः न चैवमपि महाकाले प्रतियोगितया ध्वंसापत्तिः समवायकालिकविशेषण

दि०॥ न च सत् ध्वंसकारणतावच्छेदकतया सत्ताजातिसिद्धिः यत्र प्रतियोगितासम्बन्धेन ध्वंसोत्पत्तिस्तत्रैव तादात्म्यसम्बन्धेन सदिति सामा
नाधिकरण्यप्रत्यासत्त्या कार्यकारणभावात् न च प्रागभावे व्यभिचारः प्रागभावे सत्ताविरहादिति वाच्यम् प्रागभाववृत्तिप्रतियोगिता
भिन्नप्रतियोगितायाः कार्यतावच्छेदकसम्बंधत्वादिति वस्तुतस्तु समवायेन सत्तावच्छिन्नप्रतितादात्म्येन द्रव्यत्वेन कारणतया जन्यता

मु०॥ पृथिवीत्वाद्यपेक्षया द्रव्यत्वस्याधिकदेशवृत्तित्वाद्व्यापकत्वात्परत्वम् सत्तापेक्षयाल्पदेशवृत्तित्वाद्व्याप्यत्वादपरत्वम्।
विशेषं निरूपयति अंत्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः।१०। अन्तेऽवसाने वर्त्तत इति अन्त्यः यदपेक्षया विशेषो नास्तीत्य
र्थः घटादीनां द्व्यणुकपर्यन्तानामवयवभेदात्परस्परं भेदः परमाणूनां परस्परं भेदको विशेष एव स तु॥ ❁ ॥

वच्छेदकतया सत्ताजातिसिद्धिः तादृशकार्यकारणभावे मानाभाव इति तु न स्वाश्रयसमवेतत्वसम्बन्धेन नीलादेर्नीलादावपि सत्त्वात्तन्नी
लोत्पत्तिवारणाय तादृशकार्यकारणभावस्यावश्यकत्वात् न च स्वाश्रयसमवेतत्वविशिष्टद्रव्यत्वसम्बन्धेन नीलादेर्हेतुतयैव न तदापत्ति
रिति वाच्यम् तादृशसमवेतत्वद्रव्यत्वयोर्विशेषणविशेष्यभावे विनिगमनाविरहेण कारणताबाहुल्यापत्तेः कालिकसमवायोभयसंबं
धस्य कार्यतावच्छेदकतावच्छेदकत्वान्नतायानित्यसाधारण्येपि न क्षतिरित्यन्यत्र विस्तरः॥१॥ ११ ताभ्यां तस्यापि सत्तावत्त्वादिति वाच्यम् महाका
लिकविशेषणतात्वेन कालिकविशेषणतायाः विशेषणीयत्वादेवमुत्तरत्राप्यनुसंधेयम् अव्यभिचार इति प्रतियोगितया प्रागभावे ध्वंसोत्पत्तेरिति शेषः।
कार्यतावच्छेदकसंबंधत्वादिति प्रागभाववृत्तिप्रतियोगितासंबंधेन ध्वंसं प्रति तु प्रागभावत्वेन हेतुत्वांतरमेवेति भावः नन्वेतत्कार्यकारणभावस्य प्रयोजनं
प्रागभाववृत्तिप्रतियोगितासंबंधेन प्रागभावभिन्ने ध्वंसापत्तिवारणमेव तथा च तुल्ययुक्त्या घटादिवृत्तिप्रतियोगितासंबंधेन ध्वंसं प्रति घटत्वादिनापि कारणत्व

का॰ मु॰ दि॰ रा॰ ३७

उक्तकार्यकारणभावो निष्प्रामाणिकएवेत्यस्वरसात्कार्यतावच्छेदकतया सत्तां साधयति वस्तुत इति ॥ विरहादेवसामान्यादौ ध्वंसापत्तिवारणात् उक्तकार्यकारणाभावो निष्प्रामाणिक एवेत्यस्वरसात्कार्यतावच्छेदकतया ... नीलादेः कारणतानंगीकरणीयानातो विनिगमनाविरहापत्तिरितिवाच्यं नित्यादिना विनिगमनाविरहेणेति स्वाश्रयसमवेतत्वद्रव्यत्वोभयसंबंधेनैव नीलादेः ... विशिष्टस्य संसर्गत्वेतु विशेषणविधया प्रविष्टस्याश्रयत्वस्य नीलादिप्रा न द्रव्यत्वस्य नीलादिप्रतियोगिकत्वे मानाभावेन तत्संसर्गकत्वासंभवात् विशिष्टस्य संसर्गत्वेतु विशेषणविधया प्रविष्टस्याश्रयत्वस्य नीलादिप्रा

दि॰ ॥ स्वत एवेति स्वतो व्यावृत्तत्वञ्च स्वभिन्नलिङ्गजन्यस्वविशेष्यकस्वसजातीयेतरभेदानुमित्यविषयत्वम् साजात्यञ्च पदार्थविभाजकोपाधिरूपेण तेन घटादेस्तादात्म्येन व्यावृत्तत्वेपि विशेषस्य गुणादिशून्यत्वेनेतरभेदानुमितिविषयत्वेपि द्रव्यादेरपि प्रमेयत्वादिना विशेषसजातीयत्वेपि न क्षतिः नित्यद्रव्यवृत्तिरिति विशेषाणां स्थानकथनं न तु लक्षणे प्रविष्टम् प्रयोजनाभावात् तत्र विशेषव्यावृत्तौ नन्वेतत्परमाणुत्वादयो व्यावर्त्तका भविष्यन्तीति किं विशेषेणेति चेन्न अव्यावृत्तधर्मस्य व्यावर्त्तकत्वासंभवात् त।

मु॰ ॥ स्वत एव व्यावृत्तस्तेन तत्र विशेषान्तरापेक्षा नास्तीत्यर्थः ।।२।१०। समवायन्दर्शयति घटादीनाङ्कपाला दौद्रव्येषु गुणकर्मणोः तेषु जातेश्च सम्बन्धस्समवायः प्रकीर्तितः ॥ ११ ॥

(( त्वव्यावर्त्तकान्तरापेक्षायामनवस्थानात् ननु विशेषेष्वेवप्रसंगइतिचेन्न तस्य धर्मिग्राहकमानेन स्वतो व्यावृत्ततयैव सिद्धेः एवञ्च नित्यद्रव्येषु विशेषाः सिद्धाः नद्गुणास्तु न विशेषवंत आश्रयरूपेण विशेषेणैव तेषाम्व्यावृत्तत्वात् आश्रयस्य च विशेषवत्तया व्यावृत्तत्वेन विशेषत्वसम्भवादिति भावः ईश्वराकाशयोर्नित्यज्ञानशब्दाभ्याम्व्यावृत्तेः सम्भवान्न तत्र विशेष इत्यप्याहुः नवीनास्तु विशेषेऽतिरिक्तेमानाभावः यथैव विशेषाणां स्ववृत्तिधर्मैर्विना व्यावृत्तत्वन्तथैव नित्यद्रव्याणामपीत्याहुः ।।२।१०॥

(( तियोगिकतया तत्संसर्गत्वसंभवादितिभावः ननु सत्तायाः नित्यसाधारणत्वेन कथं कार्यतावच्छेदकत्वसंभव इत्याशंकां निराकुरुते कालिकेति ननु कालिकसमवाययोरुभयोः कार्यतावच्छेदकताघटकसंबंधत्वे गौरवादुक्तकारणस्य कार्यतावच्छेदकतया जन्यमात्रसमवेतैव सत्ता सिध्येत् न तु जन्यनित्यसाधारणी भवदभिमत सत्तेत्याशंकायामाह अन्यत्र विस्तर इति अयं भावः गगनादौ सत्तानंगीकारे द्रव्यत्वादिना सांकर्यापत्त्या सत्ताया जातित्वमेव न स्यात् सांकर्यस्यापि जातिबाधकता।

राम ३७

रा०॥स्वतोव्यावृत्तत्वं चेति विशेषस्यापि स्वलिंगकस्वसजातीयविशेषांतरभेदानुमितिविषयत्वादसंभववारणाय स्वभिन्नलिंगकेति घटो विशेषाद्भिद्यते
कपालसमवेतत्वादित्यनुमितेरपि विशेषभिन्नलिङ्गकत्वाद्विशेषसजातीयविशेषप्रतियोगिकभेदविधेयत्वाच्च तादृशानुमितिविषयत्वमादायपु
नस्तद्दोषतादवस्थ्यमतः स्वविशेष्यकेति भेदे स्वसजातीयप्रतियोगिकत्वप्रवेशप्रयोजनं ग्रंथकृतैव वक्ष्यते ननु नत्र द्वयप्रवेशे गौरवात् स्वलिंगकस्ववि
शेष्यकस्वसजातीयेतरभेदानुमितिविषयत्वमेव स्वतोव्यावृत्तत्वं वक्तुमुचितं न तु यथोक्तमित्याशंकां निराकुरुते तेनेति तादात्म्येन व्यावृत्त।
त्वेपीत्यस्य घटादिना इत्यादिः नस्तनिरिति परेणान्वयः तथा च स्वतोव्यावृत्तत्वस्योक्तरूपत्वे घटादावपि तादात्म्येन घटहेतुकस्वसजातीयघ।
टांतरप्रतियोगिकभेदानुमितिविषयत्वेन तत्रातिव्याप्तिरेव स्यादिति भावः भेदे स्वसजातीयप्रतियोगिकत्वनिवेशस्य प्रयोजनमाह विशेषस्येति इतर।
भेदेति विशेषेतरद्रव्यादिभेद इत्यर्थः पदार्थविभाजकोपाधिरूपेण साजात्यप्रवेशस्य प्रयोजनमाह द्रव्यादेरपीति अथात्र स्वविशेष्यकत्वं परित्यज्या
नुमित्यविषयत्वमित्यत्रानुमित्यविशेष्यत्वमित्युक्तैव सामंजस्ये गुरुतरारंभोतिविफल एव तावतैव घटो विशेषाद्भिद्यते कपालसमवेतत्वादित्यनुमिति
मादायासंभववारणासंभवात् उक्तानुमितौ विशेषस्य मुख्यविशेष्यत्वाभावादिति चेन्न स्वत्वं हि नानुगतं किंतु तद्व्यक्तिपर्यवसन्नमेव तत्र च स्वपदेन विशे
षोपादानं न संभवति विशेषे विशेषांतरभेदसाधने विशेषेतरलिंगाभावादप्रसिद्ध्यापत्तिः किंतु घटादिकमेव तत्तद्व्यक्तित्वेनोपादाय लक्षणं
संगमनीयं तथा च स्वविशेष्यकेत्यनुक्तौ विशेषो घटाद्भिद्यते गुणत्वावच्छिन्नत्वादित्यनुमितेरपि घटभिन्नलिंगकत्वेन घटसजातीयप्रतियोगिक।
भेदविधेयकत्वेन च तादृशानुमितौ विशेषस्य मुख्यविशेष्यत्वादसंभव एव स्यात्तदुपादाने तूक्तानुमितेः घटभिन्नलिंगकत्वेपि घटमुख्यविशेष्यकत्वाभावे
न तामुपादायनासंभव इति ध्येयम् न चैवमपि विशेषकालीनो घटो घटांतराद्भिद्यते एतत्कपालसमवेतत्वादित्यनुमितेरपि घटविशेष्यकत्वात् घटभिन्न
लिंगकत्वात् स्वसजातीयघटांतरभेदविधेयकत्वाच्च तद्विषयत्वस्यैव विशेषेसत्वादसंभवतादवस्थ्यमिति वाच्यम् अविषयत्वमित्यस्य मुख्यविशेष्यताशू
न्यतार्थकत्वात् इत्थं च स्वविशेष्यकत्वानुपादाने घटो विशेषाद्भिद्यते कपालसमवेतत्वादित्यनुमितिमादायासंभवासंभवेप्युक्तरीत्या घटादिकमादायासंभ
ववारणायैव स्वविशेष्यकत्वोपादानमिति मंतव्यं अनुमितिश्च मुख्यविशेष्यताद्वयशून्यत्वेनापि विशेषणीया अन्यथा विशेषो घटाद्भिद्यते घटश्च घटा।
द्भिद्यते गुणशून्यत्वात् घटत्वाच्चेति समूहालंबनानुमितिमादाय स्वपदेन घटव्यक्तिमादायासंभवप्रसंगात् यद्यपि समवायस्य पदार्थविभाजकोपाधिरूपेण

स्वसजातीयघटांतरभेदानुमिति।।

नचसमवायेपिद्वित्वादिनासमवायभेदसत्वात्तादृशभेदानुमिति
तजातीयभेदानुमितौमुख्यविशेष्यत्वाभावेनसमवायेविशेषलक्षणातिव्याप्तिःप्रसज्यते नचसमवायेपिद्वित्वादिनासमवायभेदसत्वात्तादृशभेदानुमितिविशेष्यत्वमादायासंभवा
विशेष्यत्वस्यसमवायेसत्वात्तात्रातिव्याप्तिरिति वाच्यम् तथासतिविशिष्टेपिविशेषघटोभयभेदसत्वेनतादृशभेदानुमितिविषयोयः तद्भिन्नत्वेसतिस्वभिन्नस्वसजा
तीयभेदव्यासज्यवृत्तिधर्मानवच्छिन्नाप्रतियोगिताकत्वविशेषणस्यावश्यकत्वात् तथापितादृशानुमितिविषयोयः तद्भिन्नत्वेसतिस्वभिन्नस्वसजा
पत्वाभेदव्यासज्यवृत्तिधर्मानवच्छिन्नाप्रतियोगिताकत्वविशेषणस्यावश्यकत्वात् तथापितादृशानुमितिविषयोयः तद्भिन्नत्वेसतिस्वभिन्नस्वसजा
तीयकत्वस्यसमवायभिन्नत्वस्यवाविशेष्यदलस्यप्रवेश्यत्वात्रातिव्याप्तिरितिध्येयं अनुमितौसिषाधयिषानुत्तरत्वमपिविशेषणांदेयं अन्यथाविशेषे।
णपरमाणूनांभेदसिद्धौएतत्परमाणुसमवेतत्वादेःव्यावृत्तत्वेनसिषाधयिषयातेनलिंगेनविशेषेविशेषांतरभेदानुमितावपिनासंभवःनन्वंत्योनित्य
द्रव्यवृत्तिरिति कारिकायाअंत्यत्वेसतिनित्यद्रव्यवृत्तित्वंविशेषलक्षणमुक्तंतत्रांत्यत्वंस्वतोव्यावृत्तत्वमेवअंतेव्यावर्त्तकानामवसानेवर्ततइत्यंत्यः इ
तिव्युत्पत्त्यायस्यव्यावर्त्तकांतरंनास्तितत्वमित्यर्थलाभात् स्वतोव्यावृत्तत्वस्यैवलक्षणत्वसंभवेनित्यद्रव्यवृत्तित्वमनर्थकंसमवायस्यापिनित्यद्रव्यवृत्ति
त्वात्समवायानिव्याप्तिवारकत्वस्याप्यसंभवात् नचवृत्तित्वंसमवेतत्वमेवविवक्षितंतथाचसमवायातिव्याप्तिवारकमेवतदितिवाच्यंतथापिसमवेतत्वमा
त्रेणैवतत्रातिव्याप्तिवारणसंभवेनित्यद्रव्यांशवैयर्थ्यस्यदुर्वारत्वादित्यभिप्रायेणाहविशेषाणांस्थानकथनमितिअव्यावृत्तधर्मस्येतियस्माभ्देदसाधकत्वम
भिमतंतदवृत्तित्वेनअज्ञातधर्मस्येत्यर्थः व्यावर्त्तकत्वासंभवात् तदितरभेदसाधकत्वाभावादित्यर्थः तत्रएतत्परमाणुत्वादौव्यावर्त्तकांतरापेक्षायांएतत्पर
माणुत्वेपरमाण्वंतरावृत्तित्वसाधकहेत्वंतरापेक्षायांअनवस्थानात् अनवस्थानप्रसंगात् एषप्रसंगइति अनवस्थाप्रसंगात्मकप्रसंगइत्यर्थःतस्यविशे
षस्यधर्मिग्राहकमानेनपरमाणुभेदःकिंचिल्लिंगज्ञाप्यःभेदत्वात् कपालभेदज्ञाप्यघटभेदवदितिविशेषसाधकानुमानेनस्वतःप्रमाणांतरनिरपेक्षंव्यावृ
त्तत्वयैवपरमाण्वंतरावृत्तित्वरूपेणैवसिद्धेरितिअनुमितेरित्यर्थःपरमाण्वंतरवृत्तिविशेषस्यपरमाण्वंतरभेदसाधकत्वाभावादितिभावःउपसंहरति एवं
चेति आश्रयरूपेणरूपाद्याश्रयपरमाणुस्वरूपेणविशेषेणाव्यावर्त्तकेन ननुअव्यावृत्तस्यकथंव्यावर्त्तकत्वमित्याशंकांपरिहरतिआश्रयस्येतिननत्रेति
नेश्वरगगनयोरित्यर्थः विशेषइतिनित्यज्ञानशब्दाभ्यामेवतयोरितरनित्यद्रव्यभेदसिध्ध्याविशेषेप्रयोजनाभावादितिभावःईश्वरेत्याद्याहुरित्यंतमे
कदेशिनांमतंतत्रचदिक्कालाकाशादीनांपरस्परभेदसिद्धेःप्राक्नित्यज्ञानशब्दयोःकालादिव्यावृत्तत्वासिद्धानकालादिभेदसाधनंसंभवतिविशेष
स्यतुधर्मिग्राहकमानेनतत्सिद्धाविशेषेणैवतत्साधनंसंभवतीत्यस्वरससूचनायआहुरित्युक्तं यत्तुपार्थिवपरमाणुविशेषेजलपरमाणुविशेषभेदस्यपृथिवीसमवेतत्वेनानुमानसंभवात्स्वतोव्यावृत्तत्वस्यतत्रा॥

रा॥ व्याप्तिरितिस्वसजातीयभेदानुमितिरित्यस्य स्वेतरस्वसजातीययावतांभेदानुमितिरित्यर्थो वर्णनीय इत्याहुः न मदम् पृथिवीजलपरमाण्वोरे
वविशेषंविना भेदासिद्धेरिति यद्यपि पार्थिवजलपरमाण्वोरभेदे जलत्वपृथिवीत्वयोः सांकर्यापत्त्यानयोर्भेदसिद्ध एवेति शक्यते वक्तुं तथाप्यसंभववा
रणायानुमितौ सिषाधयिषानुत्तरत्वविशेषणस्यावश्यकतया पार्थिवजलपरमाणुविशेषयोर्भेदमंतरा पार्थिवपरमाणुविशेषस्य जलपरमाणु
व्यावृत्तत्वासिद्ध्या तत्सिद्ध्यधीनविशेषभेदानुमितेः सिषाधयिषयैवांगीकरणीयतया अव्याप्तेरसंभवादिति ध्येयं नवीनमतं दर्शयति नवीनास्त्वि
तिग्राहुरित्यस्वरसोद्भावनं तद्वीजं तु॥ त्र्यणुकावयवस्यावयवः महदारंभकत्वादित्यनुमानेन परमाणोरव्यावृत्तस्यापि सिद्धिसंभवेन नित्यद्रव्याणां
व्यावृत्तत्वस्य धर्मिग्राहकमानसिद्धत्वमेवेति ध्येयम् अत्रेदमवधेयं पूर्वोक्तयुक्त्या भेदानुमितौ सिषाधयिषानुत्तरत्वनिवेशस्यावश्यकतयास्व
मित्वलिंगकत्वनिवेशनमफलं स्वेन स्वेतरभेदसाधनस्य सिषाधयिषां विनाऽसंभवात् विशेषांतरभिन्नत्वेन स्वेन विशेषांतरभेदसाधनासं
भवेन सिद्धेरावश्यकत्वात् सिद्धिसत्वे सिषाधयिषयैवानुमितिसंभवादिति किंच परमाणूनां परस्परभेदसिद्ध्यर्थमेव विशेषांगीकार इति मू
लाभिप्रायवर्णनमप्यसंगतं परमाणुभेदः किंचिल्लिंगज्ञाप्य इत्याद्युक्तानुमानेन विशेषसिद्धौ सत्यां हि विशेषेण परमाण्वोर्भेदस्साधनीयः प
रमाण्वोर्भेदसिद्धौ हि तं पक्षीकृत्य विशेषानुमानं संभवति अन्यथा पक्षासिद्धिप्रसंगादित्यन्योन्याश्रयप्रसंगात् किंच मूलकृता घटादीनां द्व्य
णुकपर्यंतानामित्यादिना घटादीनां परस्परभेदस्य कपालभेदानुमेयत्वोक्तिरप्यसंगता घटादीनां परस्परभेदस्य प्रत्यक्षसिद्धत्वादिति वस्तु
तस्तु घटादीनां द्व्यणुकपर्य्यन्तानामित्यादौ तत्तदवयवभेदादित्यत्र पञ्चम्यर्थः प्रयुक्तत्वमेव न तु ज्ञाप्यत्वं प्रयुक्तत्वं च स्वरूपसंबंधरूपं अ
वयवभेदादवयविभेद इति प्रतीतिसाक्षिकं तथाच द्व्यणुकोत्पादान्यथानुपपत्त्या परमाणुद्वयसिद्धौ तयोर्भेदः किंचित्प्रयोज्यो भेदत्वात्॥
कालभेदप्रयुक्तघटभेदवदित्याद्यनुमाने इतरबाधबलात् परमाणुगतविशेषभेदसिद्ध्या विशेषसिद्धिरिति मूलतात्पर्यम् ननु विशेषभेदेऽपि
प्रयोजकांतरानुमानसंभवेनानवस्थाप्रसंग इत्याशंकायामुक्तं स तु स्वत एव व्यावृत्त इति विशेषस्तु स्वप्रयोज्यभेदवानेव न तु तद्भिन्नविशेषांतर
भेदप्रयुक्तभेदवानिति तदर्थः तथाच स्वतो व्यावृत्तत्वं स्वप्रयोज्यस्वनिष्ठस्वसजातीयप्रतियोगिकभेदकत्वमेवेति पूर्वस्माल्लाघवमपीति सर्वं चतु

रा॰॥ घटकपालादिपदइति घटादिकपालादिपदइत्यर्थः नित्यद्रव्यविशेष्ययोः संबंधस्य मूलेसमवायत्वानुक्तामूलस्यन्यूनत्वमित्याशंकांपरिहरति
का॰मु॰ जातेश्चेतीति ननुनित्यसंबंधत्वस्यसमवायलक्षणत्वेद्रव्यत्वाभावादीनांस्वात्मकस्वरूपसंबंधे तिव्याप्तिरित्याशंकांपरिहरति संबंधश्चेति संबंधिभि
टि॰रा॰ दि॰॥ घटादीनांकपालादौद्रव्येषुगुणकर्मणोःतेषुजातेश्चसम्बन्धइतिमूलतत्रघटकपालादिपदेअवयव्यवयवपरेइत्याह अवयवा
३९ वयविनोरितिजातेश्चेतिचकारेणनित्यद्रव्येषुविशेषसंबंधः समुच्चीयतइत्याहनित्यद्रव्यविशेषयोरिति समवायलक्षणमाह॥
नित्यसंबंधत्वमिति संबंधश्चात्र संबंधिभिन्नोग्राह्यस्तेननित्याभावादिस्वरूपसंबंधेनातिव्याप्तिः ननुसमवायस्यसंबंधत्वेकिंमान
मित्याशंक्याह तत्रप्रमाणंत्विति गुणक्रियादीत्यादिनाजातिपरिग्रहः संयोगादीति द्रव्ययोरेवसंयोगइतिनियमादितिभावः॥
अत्रसमवायसंबंधेनपटत्वावछिन्नंप्रतितादात्म्यसंबंधेनतंतुत्वेनहेतुत्वात्कार्यतावच्छेदकसंबंधविधयासमवायसिद्धिः न

मु॰॥अवयवावयविनोर्जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्चयःसंबंधःससमवायःस
मवायत्वंनित्यसंबंधत्वम् तत्रप्रमाणंतुगुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसंबंधविषयाविशिष्टबुद्धित्वा
द्दंडीपुरुषइतिविशिष्टबुद्धिवदित्यनुमानंतेनसंयोगादिवाधात्समवायसिद्धिः नचस्वरूपसंबन्धेनसिद्धसाधनमर्थान्त

चसमवायस्थानेस्वरूपसंबंधंनिवेश्यकार्यकारणभावः कल्पनीयइतिवाच्यम् तथासतियत्समवेतंकार्यमुत्पद्यतेतत्समवा
यिकारणमितिसमवायिकारणव्यवस्थानस्यात् नचयत्संबद्धंकार्यमुत्पद्यतेतत्समवायिकारणमित्येवास्त्विति वाच्यम् क
पालसंबद्धघटध्वंसंप्रतिकपालस्यसमवायिकारणत्वप्रसंगादित्यपिद्रष्टव्यम् सिद्धसाधनमिति अयुतसिद्धयोःस्वरू
पसंबंधइतिवदतःपरस्येतिशेषः अर्थांतरंवेतिसमवायसाधनेप्रवृत्तानांनैयायिकानामितिशेषः॥ ९ ६ ९ ॥
त्नइतितथाचसंबंधप्रतियोग्यनुयोगिभिन्नत्वेसतिसंबंधत्वंसमवायलक्षणमतःप्रतियोग्यनुयोगित्वात्मकस्वरूपसंबंधेनातिव्याप्तिः अ
त्रचद्रव्यत्वाभावादीनांत्वाघवात्द्रव्यत्वाभावादिरेकएवसंबंधःघटादीनांमहाकालेकालिकसंबंधोलाघवादेकएवमहाकालइतिस्वरूपसंबंधस्य

राम॰ ३९

रा०॥ गिरूपताकचिदनुयोगिरूपतेनेति विभागोवोध्यः ॥ संवंधत्वंच सांसर्गिकविषयतावत्त्वमेव द्रव्ययोरेवेति संयोगसामान्यंप्रतिद्रव्यस्यसमवा
यिकारणत्वादिति भावः ननुसमवायनानात्ववादि नांनव्यानांमते उक्तानुमानेननसमवायसिद्धिः संभवति अतिरिक्तानंतसमवायानांसंवंधत्व
कल्पनामपेक्ष्यक्लृप्तानंतस्वरूपाणामेवसंवंधत्वौचित्यात् इतितन्मतेपिसमवायसिद्ध्यर्थंस्वयंप्रमाणांतरमाह अत्रेति यत्समवेतमिति समवायेनप
इत्तिकार्यमित्यर्थः समवायाभावेसनादृशसमवायिकारणलक्षणानुपपत्तिरितिभावः यत्संवद्धमिति यदनुयोगिकसंवंधप्रतियोगीइत्यर्थः तथाच
दि०॥ ननुतथापिसमवायस्यैकत्वेकिंमानमत आह लाघवादिति तथाचयथाक्षित्यादिजनकतयेश्वरोलाघवादेकएवसिध्यतित
थासमवायोपीत्यर्थः रूपवत्तावुद्धीतिरूपवत्तावुद्धेः प्रमात्वप्रसंगइत्यर्थः स्पर्शसमवायरूपसमवाययोरैक्यादितिभावः तत्रवायौ
रूपाभावादिति नचरूपसमवायसत्वेतेनसंवन्धेनतत्रकथंरूपाभावः संवंधसत्वस्यतेनसंवंधेनसंवंधिसत्वव्याप्यत्वादिति

मु०॥ अनंतस्वरूपाणांसंबंधत्वकल्पनेगौरवाल्लाघवादेकसमवायसिद्धिः नचसमवायस्यैकत्वेवायौरूपव-
त्तावुद्धिप्रसंगः तत्ररूपसमवायसत्वेपिरूपाभावात् ॥ ॥

वाच्यमरूपनिरूपितत्वविशिष्टसमवायस्यैवरूपसंवंधतयावायौतदभावात् नचविशिष्टस्यानतिरिक्तत्वेनविशि॥ ६
ष्टसमवायोपिवायावस्तीतिवाच्यम् रूपनिरूपितत्वविशिष्टसमवायनिरूपिताधिकरणतायाएवरूपसंवंधत्वात्तस्य
वायावभावात् पृथिव्यांगंधस्यसमवायोजलइत्यादिप्रतीतेः समवायस्यनानात्वमितितुनव्याः॥ ६ ६ ६ ६ ६ ६
संवंधत्वेनैवसंवंधप्रवेशात् समवायाभावेपिनसमवायिकारणलक्षणानुपपत्तिरितिभावः सिद्धसाधनमित्यत्रकस्यसिद्धमित्याकांक्षोदया
दाह अयुतेति ययोरेकमपराश्रितमवतिष्ठतेतावयुतसिद्धौ अर्थांतरशब्दस्यस्वानभिमतार्थसिद्धिरर्थः तत्रापिकस्येत्याकांक्षोदयादाह समवायेति
लाघवादिति लाघवज्ञानसहकारादित्यर्थः कृतिजन्यत्वव्याप्यकार्यत्ववानिति परामर्शादपिकृतेरेकत्वेलाघवमितिलाघवज्ञानसहकृतात्क्षि-
त्यंकुरादिकमेवकृतिजन्यमित्यनुमितिवत् संवंधस्यैकत्वेलाघवमितिज्ञानसहकृतात् विशेषणविशेष्यसंवंधविषयकत्वव्याप्यविशिष्टवुद्धित्ववतीगु

का॰ मु॰
दि॰ ए॰
८०

रा॰॥ मर्शादपि विशेषणविशेष्ययोरेकसंबंधविषयिणीत्यनुमितिरिति समुदायार्थः समवायस्यैकत्वे वायौ रूपवत्ताबुद्धिरापादिना मूलकारेणासा च न
संगच्छते वायावपि भ्रांतानां रूपवत्ताप्रतीतेरतः रूपवत्ताबुद्धेः प्रमात्वापत्तिपरतया व्याचष्टे रूप वत्तेति नत्र हेतुमाह स्पर्शेति संबंधसत्वस्येति तत्प्रति
योगिकतत्संबंधसत्वस्य तेन संबंधेन तद्वत्वव्याप्यत्वात् प्रतियोगिमतिच अभावसत्वादिति भावः इतितु नव्या इति तथा च तन्मते समवायस्य स्वरूपसं
बंधत्वेन स्वीकृतिः वायौ रूपसमवायानंगीकारादिति भावः ॥ अभावस्यापि वैशिष्ट्यं संबंधांतरं सिध्येदिति मूले संबंधांतरपदस्य संयोगसमवायातिरिक्त॥
दि॰॥ संबंधांतरं अतिरिक्तपदार्थतयेति शेषः सिध्येदित्यस्य भूतलादावित्यादिः यदि वैशिष्ट्यमतिरिक्तमुररीक्रियते तदा तन्नित्यमनि
त्यं वेति विकल्प्याद्ये दूषणमाह॰ तस्येति ननु वैशिष्ट्यस्य तत्र सत्वेपि घटानयनदशायां तत्र घटाभावाभावादेव न घटाभावबुद्धिरत आह घ
टाभावस्येति तत्र घटवति भूतले तस्येति घटाभावस्येत्यर्थः अन्यथा घटाभावस्यानित्यत्वे देशांतरेपि घटशून्यदेशेपीत्यर्थः घटत्वाव

मु॰॥ नन्वेवमभावस्यापि वैशिष्ट्यं संबंधांतरं सिद्ध्येदिति वाच्यम् तस्य नित्यत्वे भूतले घटानयनानंतरमपि घटाभावबुद्धिप्र
संगात् घटाभावस्य तत्र सत्वात् तस्य च नित्यत्वात् अन्यथा देशांतरेपि घटाभावप्रतीतिर्न स्यात् वैशिष्ट्यस्य च तत्र सत्वात् ॥
ममतु घटे पाकरक्ततादशायां श्यामरूपस्य नष्टत्वात्तन्न तद्वत्ताबुद्धिः वैशिष्ट्यस्यानित्यत्वे त्वनंतवैशिष्ट्यकल्पने तवैव गौरव

च्छिन्नाभावस्यैकविधत्वादिति भावः वैशिष्ट्यस्येति वैशिष्ट्यस्य नित्यत्वाभ्युपगमपक्षइत्यादिः तत्र घटानयनेन घटवति न च घटवति न घ
टाभावबुद्धिर्घटवत्ताज्ञानस्य प्रतिबंधकस्य सत्वादिति वाच्यम् घटवत्ताज्ञानविरहदशायां जायमानाया घटाभावबुद्धेरिति प्रमात्वप्रसंगा
दित्यत्र तात्पर्यात् ननु सिद्धांतिनोपि मते याकेन रक्ते घटे श्यामरूपसमवायस्य सत्वात् श्यामरूपवत्ताधीप्रसंग इत्यत आह ममत्विति द्विती
यैकत्वे दृष्टापत्तिरेव स्वरूपस्यैव तत्संबंधत्वोपगमादतः पूरयति अतिरिक्तेति उररीक्रियते अंगीक्रियतेइत्यर्थः द्वितीये दूषणमाह वैशिष्ट्यस्येति॥
नन्वेकघटाभावस्य नाशेपि घटाभावांतरमादाय घटशून्यदेशेपि घटाभाववत्ताबुद्धिरुपपद्यत एवेत्याशंक्याह घटत्वावच्छिन्नेति एकविधत्वादिति॥
एकत्वादित्यर्थः जायमानायाः घटाभावबुद्धेरिति घटवत्ताज्ञानदशायां घटवत्यपि भूतले भ्रमरूपा घटाभाववत्ताबुद्धिर्जायत एवेति तत्तदापत्तिः सं

सविकल्पकत्वाः प्रमात्वापादकमिति॥

एम
८०

रा॰॥ नन्वेषः प्रसंगः समवायैकत्ववादिनां मतेपि समानमित्याशंक्य ममत्वित्यादिग्रंथमवतारयति नन्विति वैशिष्ट्यानंगीकारे अभावाधिकरणयोरतिरि
क्तसंबंधानंगीकार इत्यर्थः स्वरूपस्य संबंधत्वे बाधकमाह तयासतीति तत्तत्कालीनं तत्तद्भूतलादिकमित्यत्र यदा यदा भूतले घटाभावो वर्तते तत्कालीन
मित्यर्थो न संभवति घटवत्तादशायामपि घटाभावभूतलावृत्तित्वप्रयोजकस्य दुर्वचत्वात् अतस्तज्ज्ञानकालीनमित्यत्र ज्ञानपदं प्रमात्वेनाभिमतज्ञान
परं तेन घटवत्तादशायामपि भ्रमात्मकघटाभाववत्त्वबुद्धिसंभवेन तामादाय नोक्तदोषतादवस्थ्यमिति ध्येयम् तत्तत्कालीनमित्यस्यार्थमाह घटाभाव
वदिति नन्वेवमभावाधिकरणयोः स्वरूपएव संबंध इति सिद्धांतो व्याहन्येतेत्याशंकां निराकुरुते तथाचेति स्वरूपविशेष इति तथा च स्वरूपसंबंध इ

दि॰॥ ननु वैशिष्ट्यानंगीकारे घटाभावभूतलयोः कः संबंधः स्वरूपमिति चेत्तथासति घटशून्यतादशायामिव घटवत्तादशायामपि भूतले
घटाभावबुद्धिस्तव मतेपि स्यात् घटाभावभूतलयोस्तत्स्वरूपसंबंधस्य च तत्र सत्वात् अत आह एवंचेति तत्तत्कालीनमिति घटाभाववद्भूतल
मिति ज्ञानकालीनमित्यर्थः तत्तद्भूतलादिकमिति यत्र यत्र भूतले घटाभावबुद्धिस्तत्तद्भूतलादिकमित्यर्थः तत्तदभावानामिति यस्य यस्य

मू॰॥ एवंच तत्तत्कालीनं तत्तद्भूतलादिकं तत्तदभावानां संबन्धः ॥११॥ ६ ॥

स्याभावस्य बुद्धिस्तस्य तस्येत्यर्थः तथा च न स्वरूपमात्रं संबंधः किंत्वीदृशः स्वरूपविशेष इति न पूर्वोक्तातिप्रसंग इति भावः नव्यास्तु वै
शिष्ट्यं पदार्थांतरमेव भूतलं घटाभाववदिति प्रत्ययात् स्वरूपसंबंधाभ्युपगमे चाभावाधिकरणवृत्त्यखंडभेदतावन्मात्रविषयकज्ञाना
त्यस्यापि स्वरूपविशेषः संबंध इत्यत्रैव तात्पर्यात् न सिद्धांतव्याघात इति भावः नव्यास्त्विति ननु भूतलं घटाभावव॥दिकमादाय विनिगमनावि
दितिप्रतीतेः स्वरूपसंबंधेनैवोपपत्त्या वैशिष्ट्यस्य पदार्थांतरत्वे मानाभाव इत्यत आह स्वरूपसंबंधेति अभावाधिकरणं तत्तद्भूतलादि तद्वृत्त्यखंडो भे
दः तन्निष्ठत्वप्रकारकप्रमाविशेष्यत्वावच्छिन्नभेदः ननु तत्तदधिकरणमात्रवृत्त्युक्तभेदस्याधिकरणातिरिक्तत्वेन तदधिकरणव्यक्तावनंतभेदांगीका
रप्रसंगेन तस्याधिकरणस्वरूपत्वमेवोचितमतस्तमादाय न विनिगमनाविरहप्रसंग इत्यत आह तावन्मात्रेति॥ वस्तुतस्त्वत्र खंडैकभेदेन सा
कमधिकरणानां न विनिगमनाविरहस्संभवति अधिकरणानां नानात्वेन लाघवादेकभेदस्यैव संबंधत्वोचित्यादतस्तद्विषयकज्ञानादिकमा

भेदमात्रस्य तथात्वे ऽन्योन्याभावस्यैव विलयप्रसंगादि

का॰मु॰ ष्ट॥ प्रसंजयतितात्तन्मात्रेत्यादि एतेन अनवस्थाभयेन भेदस्यैव अधिकरणरूपत्वांगीकरणीयानतु भेदमात्रस्य तथात्वे ऽन्योन्याभावस्यैव विलयप्रसंगादि

दि॰स॰ निदूषणंपरास्तंद्रव्यगुणादिविषयकज्ञानव्यक्तेर्द्रव्यत्वाभावसंबंधत्वेगुणादाविवद्रव्येपिद्रव्यत्वाभावबुद्धिप्रसंगः संबंधात्मकज्ञानस्यद्रव्येपिविशेष्यतयास

४१ त्वादतोमात्रपदं आदिनादृच्छादिपरिग्रहः युक्तम् चैतत् समवायनानात्ववादिनांनव्यानांमतेअन्ययातिरिक्तनानासमवायकल्पनामपेक्ष्यक्लृप्तस्वरूपाणा

मेवसंबंधत्वौचित्येनतन्मतेतिरिक्तसमवायस्यैवासिद्धि प्रसंगादितिमंतव्यंअत्रचाहुरित्यनेनास्वरसोद्भावनंतद्बीजंतु तदधिकरणविषयकनानाज्ञानव्यक्तीनां

ष्टि॥ द्रव्यादिषट्कान्योन्याभावेति इहचद्रव्यत्वादिनप्रतियोगितावच्छेदकमननुगमात् किंतु तद्भिन्नषट्त्वसंख्यैवद्विप्रतियोगिताकभेदस्यहि

त्वमिवेतिध्येयंवस्तुतोभावत्वमेवतथावोध्यम् अत्रकेचित् भावभिन्नत्वस्याभावत्वेभावत्वरूपविशेषणाज्ञानशून्यकालेघटोनास्तीतिप्रतीत्य

नापत्तिःएवमन्योन्याभावत्वस्याभावत्वगर्भस्याग्रेवक्तव्यतया ऽभावत्वस्यान्योन्याभावत्वगर्भत्वेअन्योन्याश्रयत्वापत्तिःएवमभावत्वस्यभाव

मु॥ अभावंविभजते अभावस्तुद्विधासंसर्गान्योन्याभावभेदतः अभावत्वंद्रव्यादिषट्कान्योन्याभाववत्त्वम् संसर्गा

भावान्योन्याभावभेदादित्यर्थः अन्योन्याभावस्यैकविधत्वात्तद्विभागाभावात्॥१२ भिन्नत्वरूपत्वे ऽभावोनभावइतिवाक्या

त्स्वत्वोधानुपपत्तिश्च उद्देश्यतावच्छेदकविधेययोरैक्यादितितस्मादखंडोपाधिरननुयोगिताविशेषोवाभावत्वमितिवदंति अत्रनव्याः

अभावत्वस्याखंडोपाधित्वेप्रमाणाभावः किंतुभावभिन्नत्वंसमवायसामानाधिकरण्यान्यतरसंबंधावच्छिन्नप्रतियोगिताकसत्ता

भावरूपं तच्चपूर्वानुपस्थितमपिप्रकारःएवंचघटाभावपटाभावप्रतीतीनामभावांशे ऽनुगतत्वमुपपद्यते॥१३ संबंधत्वकल्पनामपेक्ष्यैक राम॰

स्यास्याधृत्केस्तथा त्वेलाघवात्तन विनिगमनाविरहः यत्किंचिदेकज्ञानव्यक्तेरेवतथात्वेतज्ज्ञानव्यक्त्यभावदशायांसंबंधाभावेनाभावविशिष्टबुद्ध्यनुदयापत्तेः ४१

नित्यज्ञानव्यक्तेस्तथात्वेचैतस्याः सर्वविषयकत्वेनप्रतियोगिमत्यभावबुद्धिप्रसंगइतिवोध्यम्।१४॥षट्त्वसंख्यैवेति यद्यपिघटपटोभयभेदस्यप्रत्येकंघ

टपटयोरिवषट्त्वावच्छिन्नभेदस्याभावत्वेतस्यप्रत्येकंद्रव्यादावपिसत्वेनतेषामप्यभावत्वापत्तिःतथापिपर्याप्तिसंबंधेनषट्त्वावच्छिन्नभेदस्यद्रव्यादौ

सत्वेप्यपेक्षाबुद्धिरूपषट्त्वस्यविषयतया ऽवच्छेदकत्वात्नभावेष्वतिप्रसंगइतिमंतव्यम्॥ ॥

ग॰ ॥ ननु व्यासज्यवृत्तिधर्माणां पर्याप्तिसंबंधेनैव प्रकारकत्वनियमः अन्यथा द्वित्वस्य समवायेन प्रत्येकमपि सत्वेनैको द्वाविति प्रतीत्यापत्तेः नचैको द्वाविति प्रतीतिविरहेपि एको द्वित्ववानिति प्रतीतेरिष्टतया समवायेनापि व्यासज्यवृत्तिधर्माणां प्रकारत्वमावश्यकमिति वाच्यम् द्वित्ववानिति प्रतीतौ मतुवर्थसमवायस्यैव प्रकारत्वात्तथा च षड्भिन्नमिति प्रतीतौ पर्याप्तिसंबंधेनैव षट्त्वस्य प्रकारत्वानुभवात् षट्त्वावच्छिन्नभेदो निष्प्रामाणिक एवेत्यभिप्रायेणाह वस्तुत इति तथा वोध्यमिति भावत्वं वोध्यमित्यर्थः यद्यपि द्रव्यादिभेदषट्कस्याभावत्वेन कोपि दोषः तथापि गौरवात् द्रव्यादीनां षसां पदार्थानामज्ञानेपि अभावत्वप्रतीतेश्चानदुपेक्षितमिति ध्येयम् अभावत्वस्याखंडोपाधित्वं वदतां मतमुपन्यस्यति अत्र केचिदिति अभावत्वगर्भस्येति तादात्म्यसंबंधावच्छिन्नप्रतियोगिताकत्वमात्रस्यान्योन्याभावत्वस्य शरीरे घटत्वादौ घटत्वाभाववद्भेदरूपेतिव्याप्तिवारणाय भावत्वनिवेशस्यावश्यकत्वादिति भावः अन्योन्याश्रयापत्तिरिति अभावत्वज्ञानेन्योन्याभावत्वज्ञानस्य अन्योन्याभावत्वज्ञाने चाभावत्वज्ञानस्यापेक्षितत्वादिति भावः उद्देश्यतावच्छेदकेत्यादि अभेदसंसर्गकशाब्दवोधे उद्देश्यतावच्छेदकविधेयतावच्छेदकयोरैक्यस्यैव भेदसंसर्गकशाब्दवोधे उद्देश्यतावच्छेदकविधेययोरैक्यस्यापि निराकांक्षताप्रयोजकत्वादिति भावः अभा

दि॰ ॥ न च विषयतानवस्था सत्तात्यंताभावव्यक्तेः स्वरूपत एव प्रकारत्वोपगमात् अत एव सत्तारूपप्रति ।
योगिज्ञानं विनापि घटो नास्तीति वुद्धेः सप्रकारः अभावत्वप्रकारकप्रत्ययस्य एव प्रतियोगिधियो हेतुत्वात् ॥

वत्वस्याखंडोपाधित्वं न विचारसहं तत्साधकमानाभावादित्यभिप्रेत्याह अनुयोगिता विशेषो वेति संसर्गानुयोगिताव्यावर्त्तनाय विशेषपदं प्रमाणाभावइति ननु घटाभावादौ अभाव इत्यनुगतप्रतीतिरेव तत्साधिका भविष्यतीत्याशंकायां अनुगतप्रतीतिं प्रकारांतरेणोपपादयति किं त्विति नन्वेवमभावत्वस्यान्योन्याभावगर्भतयोक्तान्योन्याश्रयापत्तिरित्यत आह समवायेति सत्ताभावरूपमित्यस्याभावत्वमिति शेषः नन्वेवमपि सत्तानुपस्थितिदशायां घटो नास्तीत्यादिप्रतीत्यनुपपत्तिरत आह न चेति ननु अनुयोगिता विशेषस्याभावत्वोपगमे लाघवात्तदेव कुतो नांगीकृतमित्यत आह एवं चेति अभावांशेनुगतत्वमिति एकधर्मप्रकारकत्वमित्यर्थः तथा चाभावत्वस्यानुयोगितारूपत्वे तस्याः घटाभावादौ भिन्नतया अभावप्रतीतेरनुगतत्वं न स्यादिति भावः ।
ननु जातीतरस्य सत्ताभावस्य स्वरूपतो भानासंभवेन अभावत्वेनैव तस्य प्रकारता वाच्या न च सत्ताभावरूपं तदपि पुनः सत्ताभावरूपाभावत्वेन प्रकार इत्यंगीकरणीयं तथा चाभावप्रतीतौ विषयतानंत्यमिति शंकां निराकुरुते न चेति विशेष्यपदस्य सत्ताभावस्य एकस्यैव तत्तत्प्रकारत्वात् विषयानवस्थानोक्ता

ता सत्ता
का॰मु॰ रा॥ बोध्यं ननु सत्ताभावस्य स्वरूपतः प्रकारत्वोपगमेपि सत्तोपस्थितिशून्यकाले घटो नास्तीत्यादिप्रतीतिरनुपपन्नैव अभावज्ञाने प्रतियोगिज्ञानस्य हेतुतया सत्ता
दि॰रा॰ ज्ञानं विना सत्ताभावभानासंभवादित्यत आह अत एवेति प्रत्यक्षस्यैवेति अभावविषयकशाब्दबोधादौ प्रतियोगिज्ञानामपेक्षणात् प्रत्यक्षस्येत्युक्तं॥ ७॥ इदमि
४२ ति प्रत्यक्षविषयत्वं तमस्त्वं तु न तेजोऽभावत्वरूपं अपि तु तेजोऽभावनिष्ठतद्व्यक्तित्वमेव नानस्ते जोज्ञानं विना तादृशप्रतीत्यनुपपत्तिः ननु सत्ताभावस्य पूर्वानुप
स्थितस्य प्रकारत्वोपगमे विशिष्टबुद्धित्वावच्छिन्नं प्रति विशेषणज्ञानत्वेन हेतुतायां व्यभिचार इत्याशंकायामाह नचेति तादात्म्यत्वेन तादात्म्यावच्छिन्नत्वविवक्षायाः
दि॰॥ अन्यथा इदं तम इति प्रतीत्यनापत्तेः नच सत्ताभावरूपस्याभावत्वस्यानुपस्थितस्य प्रकारत्वे विशेषणधियो हेतुत्वे व्यभिचार इति वाच्यम्॥
विशेषणभेदेन हेतुताया भिन्नत्वेन तत्र तद्धेतुत्वानुपगमात् कल्पनागौरवेण प्राचीनान्यथानुपपत्त्या रूपभेदस्य कल्पनाया इति प्राहुः संसर्गान्योन्याभावभेदत इति मूलादेकः संसर्गा॥
स्वयोः परोन्योन्याभाव इति प्रतीयते तेन न्यायुक्तं संसर्गस्याभावत्वानंगीकारादित्यत आह संसर्गाभावेति तथाच द्वंद्वान्परं श्रूयमाणस्याभावपद
स्य प्रत्येकं संबंधात् संसर्गाभावोन्योन्याभावश्चेति मूलार्थ इति भावः क्रमेणाद्वयोरभावयोर्लक्षणमाह संसर्गाभावत्वमिति अन्योन्याभावेऽतिव्याप्तिवार
मु॰॥ संसर्गाभावं विभजते प्रागभावस्तथाध्वंसोप्यत्यंताभाव एव च॥ १२॥ एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते संसर्गाभावत्वमन्योन्या
भावभिन्नाभावत्वं अन्योन्याभावत्वं तादात्म्यसंबंधावच्छिन्नप्रतियोगिताकाभावत्वं विनाश्यभावत्वं प्रागभावत्वम्॥ णायान्योन्याभा
वभिन्नेति घटादावतिव्याप्तिवारणायाभावपदमेवमग्रेपि तादात्म्येति तादात्म्यत्वेन तादात्म्यावच्छिन्नत्वं प्रतियोगितायां विवक्षितं तेन संयोगावच्छि
न्नप्रतियोगिताके संयोग्यत्यंताभावे नातिव्याप्तिः प्रागभावस्य लक्षणमाह विनाश्यभावत्वमिति अत्र ध्वंसेतिव्याप्तिवारणाय विनाशीति ननु प्राग
भावसत्वे किं मानमिति चेदत्रोत्पन्नस्य पुनरुत्पादभियानन्नस्ति सिद्धिरिति प्राचः केचित्तु जातो घट इत्यादिवदुत्पत्त्रो घटध्वंस इति प्रत्यक्षवलेन नाशो राम॰
तिरिच्यते न तु प्रागभावः॥ फलमाह तेनेति संयोग्यत्यंताभाव इति संयोगितादात्म्यस्य संयोगरूपतया संयोगसंबंधावच्छिन्नप्रतियोगिताकात्यन्ताभा ४२
वे यथा श्रुतेऽतिव्याप्तिः इदानीं तु तादात्म्यत्वावच्छिन्नतादात्म्यनिष्ठाया संसर्गविधयावच्छेदकतानतिरूपकप्रतियोगिताकत्वाभावेन अत्यंताभावीयसंयोगनिष्ठ
प्रतियोगितावच्छेदकतायाः संयोगत्वेनैवावच्छिन्नत्वान्नातिव्याप्तिरिति भावः यद्यपि संयोगितादात्म्यस्य संयोगरूपत्वेन तत्तादात्म्यत्वमपि संयोगत्व
मेवेत्यतिव्याप्तिनिरासो दुर्घट एव तथापि संसर्गतावच्छेदकं तादात्म्यत्वं। न संयोगत्वादिरूपं किंतु संयोग्यादिवृत्त्यसाधारणधर्मत्वमेव॥ १६७॥

स्पसंयोगा१

र॰।।अतोऽत्यन्ताभावीयप्रतियोगितायांसंयोगत्वेनैवावच्छेदकत्वात् असाधारणधर्मत्वेन अवच्छेदकत्वविरहान्नतत्राव्याप्तिः अत्रभेदप्रतियोगितावच्छेदकसंस
र्गस्यैव असाधारणधर्मत्वेनभानाभ्युपगमात् अन्यथात्यंताऽभावान्योन्याभावयोर्भेदासंभवादितिभावः तत्सिद्धिरितिप्रागभावानुमितिरित्यर्थः तदनुमानप्र
कारस्तु अयंघटः स्वोत्पत्तिक्षणावृत्तिकारणाजन्यः स्वोत्पत्तिद्वितीयक्षणानुत्पन्नत्वात् इत्येवंरूपः इत्यनुमानबलाच्चेतरेषांबाधात्प्रागभावसिद्धिः तस्यसामग्री।
नाश्यत्वेनप्रतियोगुत्पत्तिक्षणावृत्तित्वादितिभावः दीधितिकृतांमतमुपन्यस्यति केचिदिति लोकानामिति पंडितपामरसाधारणानामित्यर्थः प्रागभावस्यप्रत्य
क्षत्वेयामराणामपितत्प्रत्यक्षापत्तिरितिभावः नचात्रघटोभविष्यतीत्यादिप्रतीतिरेवप्रागभावेमानंवर्तमानप्रागभावप्रतियोगित्वस्यैवभविष्यत्त्वरूपत्वादितिवा

दि॰।।इहेदानींघटप्रागभावइतिलोकानांप्रत्ययाभावात् नचतद्घटोपधायकतत्कपालतत्संयोगादीनांतद्घटोत्पत्तिकालेपिसत्वात्पुनरपितद्घटो
त्पत्यापत्तिः प्रागभावांगीकारेचतदभावादेवनपुनस्तदुत्पत्तिरितिवाच्यम् जन्यद्रव्यत्वावच्छिन्नंप्रतिजनकतयाक्लृप्तस्यसमवायसंबंधावच्छि।
न्नप्रतियोगिताकद्रव्याभावस्यविरहेणैवतदापत्यसंभवात् नचजन्यद्रव्याभावस्यजन्यद्रव्योत्पत्तिकालीनोत्पत्तिकध्वंसाभावस्यवाहेतुत्वमित्य
त्रविनिगमनाविरहेणतादृशद्रव्याभावस्यतादृशध्वंसाभावानांचकारणतामपेक्ष्यलाघवादेकस्यैवप्रागभावोहेतुःकल्प्यतइतिवाच्यम् प्राग
भावकल्पनेपितत्कालोत्पत्तिकानंतपदार्थप्रतियोगिकानामनंतानांप्रागभावानांविनिगमनाविरहेणहेतुतायादुर्वारत्वात् तथाचप्रागभा
वरूपधर्मिकल्पनागौरवंपरमतिरिच्यतेइत्याहुः।।१२ च्यम् वर्तमानत्वंतद्ध्वंसाधिकरणकालोत्पत्तिकत्वस्यैवभविष्यत्त्वरूपत्वाभ्युपगमात् उत्पत्तिश्च
आद्यक्षणसंबंधः क्षणोआद्यत्वंचतदधिकरणक्षणध्वंसानधिकरणत्वमितिभावः जनकतयाक्लृप्तस्येति। प्रागभावकारणत्ववादिनाजन्यद्रव्यंप्रतिद्र
व्याभावस्यकिमितिकारणत्वंकल्पनीयमितितुनाशंकनीयं यत्रएतद्घटनाशानंतरंतदारंभककपालाभ्यांघटांतरमुत्पद्यतेतत्रपूर्वघटोत्पत्तिद्वि
तीयक्षणेपुनर्घटोत्पत्तेःअन्यथावारयितुमशक्यत्वात् घटकारणीभूततत्तत्प्रागभावकपालसंयोगादीनांसत्वात् नवद्वितीयघटारंभककपालद्व।
यसंयोगव्यक्तेस्तदानीमसत्वान्नतदापत्तिरितिवाच्यम् यतोहितद्द्वितीयघटाद्युत्पत्तिरापाद्यतेयेनतत्कपालसंयोगव्यक्त्यभावात्ननदापत्तिरितिश
क्यतेवक्तुंनवापूर्वघटव्यक्तेरुत्पत्तिरापाद्यतेयेनतत्प्रागभावाभावात्॥

का॰मु॰ टि॰ए॰ ४३

यत्तु यत्रयाखण्डघटो

स्याननदापत्तिरितिशङ्क्यनेवक्तुंअपितुघटत्वावच्छिन्नोत्पत्तिरेव आपाद्यतेतेनकारणीभूतानांघटप्रागभावादीनांसर्वेषांसत्वादितिभावः

दि॰ अत्रवदंतिस्वानधिकरणेषुतंतुषुपटोत्पत्तिवारणायसहस्रतंतुकपटस्थलेवहूनांतंतूनांतत्संयोगानांचतत्तद्व्यक्तित्वेनहेतुत्वकल्पनापेक्ष

येकप्रागभावस्यहेतुतालघीयसी अथैवमपिद्वित्रिचतुर्षुतंतुषुसहस्रतंतुकपटोत्पत्त्यापत्तिःनचचरमसंयोगव्यक्तेस्तद्व्यक्तित्वेनहेतुत्वान्नापत्तिरिति

वाच्यम् तथासतिस्वानधिकरणेषुतंतुष्वपिचरमसंयोगाभावादेवपटोत्पत्तिवारणसंभवेप्रागभावकल्पनानौचित्यादितिचेन्नचरमसंयोगस्यसमवा

यघटितसामाधिकरण्यप्रत्यासत्याहेतुत्वेतंत्वंतरेपिसमवायेनपटोत्पत्त्यातत्रसमवायेनचरमसंयोगाभावेनव्यभिचारापत्त्याकालिकसंबंधेन

तत्पटत्वावच्छिन्नंप्रतिचरमसंयोगव्यक्तेःकालिकसंबंधेनहेतुतावाच्यातथाचस्वानधिकरणतंतुष्वपिकालिकविशेषणतयाचरमसंयोगसा

मु॰ जन्याभावत्वंध्वंसत्वंनित्यसंसर्गाभावत्वमत्यंताभावत्वं यत्रतुभूतलादौघटादिकमपसारितंपुनरानीतंचतत्रघटकाल

स्यसंबंधाघटकत्वादत्यंताभावस्यनित्यत्वेपिघटकालेनघटात्यंताभावबुद्धिःतत्रोत्पादविनाशशालीचतुर्थोपमभावइतिकेचित्

अत्रध्वंसप्रागभावाधिकरणेनात्यंताभावइतिप्राचांमतंश्यामघटेरक्तोनास्तिरक्तघटेश्यामोनास्तीतिधीःप्रागभावंध्वंसंचावगा

((हतेननुतदत्यंताभावंतयोर्विरोधात्॥

सत्वात्पटोत्पत्तिवारणायप्रागभावहेतुत्वस्यावश्यकत्वादिति एवमप्यत्रकश्चिदतिरिक्तः।

पदार्थस्तथापितस्यसप्रतियोगिकत्वेप्रमाणाभावइतितुत्वम् ध्वंसस्यलक्षणमाहजन्याभावत्वमिति प्रागभावेतिव्याप्तिवारणायंजन्येतिअत्यंता

भावस्यलक्षणमाहनित्येति ध्वंसादिवारणायनित्यपदंतन्त्वत्यंताभावस्यनित्यत्वेघटानयनानंतरमपिभूतलेघटोनास्तीतिप्रतीत्यापत्तिरित्य

तआहयत्रत्विति तथाचसंबंधाभावादेवघटानयनानंतरंघटात्यंताभावबुद्धिर्नेतिभावःकालविशेषविशिष्टस्वरूपस्यसंसर्गत्वोपगमादेवघट

वतिघटोनास्तीतिप्रतीत्यभावोपपत्तौचतुर्थसंसर्गाभावेमानाभावइत्यस्वरसःकेचिदित्यनेनसूचितःननुमास्तुघटकालेघटात्यंताभावबुद्धिःघ

त्यतिर्भविष्यतितत्रमहाघटसत्वदशायामेवनप्रागभावादितिवल्लानतुत्पत्त्यापत्तिवारणायद्रव्याभावसकारणत्वमावश्यकमितिनतुच्छंखंडघटंप्रति

तोमहीतःसाक्षिनेतरस्मादितिन्यासाशंकाविद्धेक्षेत्रेति॥

राम ४३

मधि॰ ३॥

रा॰॥ टनाशस्यकारणत्वेनतदापत्त्यसंभवादितिध्येयं तादृशद्रव्याभावस्येति समवायावच्छिन्नप्रतियोगिताकद्रव्याभावस्येत्यर्थः तादृशध्वंसाभावानामिति
जन्यद्रव्योत्पत्तिकालोत्पत्तिकध्वंसाभावानामित्यर्थः अत्रचबहुवचनेनद्रव्यत्वाभावत्वापेक्षयातादृशध्वंसाभावत्वस्यगुरुत्वपानतेनरूपेणाकारणतामादायवि
निगमनाविरहः प्रसज्यते अपितुतत्तद्द्रव्यंप्रतितदुत्पत्तिकालोत्पत्तिकध्वंसव्यक्तीनांतत्तद्व्यक्तित्वेनैवाभावानांकारणतावाच्यातथाचानंतकार्यका
रणभावापत्त्यानविनिगमनाविरह इतिसूचितं नचतर्हिध्वंसाभावानांकारणतैवनिंतु किंकेतिवाच्यम् ध्वंसप्रागभावाधिकरणेऽत्यंताभावानभ्युपगं
तृमतेजन्यद्रव्यानुत्पादप्रसंगेनअगत्याद्रव्याभावमुपेक्ष्यध्वंसाभावानांकारणतायाःस्वीकरणीयत्वात् तथाचोत्पन्नस्यपुनरुत्पादवारणायप्रागभावांगीका

दि॰॥ ननुतर्हिरक्तरूपप्रागभावाधिकरणेश्यामघटेश्यामरूपध्वंसाधिकरणेचरक्तघटेकथंरक्तोनास्तिश्यामोनास्तीतिप्रतीतिः ध्वंसप्राग
भावयोरधिकरणेऽत्यंताभावस्यासत्वादित्यतआह श्यामघटइति तत्रेतिध्वंसप्रागभावयोरित्यर्थः अत्यंताभावेनसहेतिशेषः तथाचनव्य।
मतेपूर्वपक्षिकथितशंकायामिष्टापत्तिरेवेतिभावः युक्तंचैतत् कथमन्यथापूर्वमग्रेपिरक्तेमध्येश्यामेचघटेरक्तंरूपंनास्तीत्याकार

मु॰॥ नव्यास्तुतत्रविरोधेमानाभावात् ध्वंसादिकालावच्छेदेनाप्यत्यंताभावोवर्ततइत्याहुः॥ ९ ९ ९॥

कप्रत्ययस्तस्यसामान्याभावावगाहित्वात् नचेदृशप्रत्यययोरक्तिमध्वंसाद्यवगाहीपूर्वापररक्तिमध्वंसप्रागभाववतिरक्तेपितादृशाकारप्रत्य
यप्रसंगादितिनचरक्तत्वावच्छिन्नप्रतियोगिताकत्वंध्वंसप्रागभावयोरव्याप्यवृत्तित्वितेनांतराश्यामेरक्तंरूपंनास्तीतिप्रत्ययस्तदाध्वंसप्रा
गभावयोःसामान्यावच्छिन्नप्रतियोगिताकत्वस्वीकारात् ननुपूर्वापररक्तिमध्वंसप्रागभाववतिरक्तेतत्रतदानदनभ्युपगमादिति॥९

रेनवीनैर्द्रव्याभावस्यप्राचीनैःध्वंसाभावानांहेतुताकल्पनीयाप्रागभाववादिनातुतत्सर्वमुपेक्ष्यप्रागभावस्यैवहेतुत्वंकल्प्यतइतितद्ग्रन्थाभिप्रायः
सवंजन्यद्रव्यंप्रतिद्रव्योत्पत्तिकालिकोत्पत्तिध्वंसाभावस्यहेतुत्वेनद्घटनाशानंतरंतदारंभककपालाभ्यांघटांतरोत्पत्तिरपिनस्यात् तादृशध्वंसाभावरू
पकारणाभावादिति॥ अत्रवदंतीतिप्राचीनानुयायिनइतिशेषः तत्संयोगानांतंतुसंयोगानामित्यर्थः अथैवमपीतिप्रागभावस्यहेतुत्वेपीत्यर्थः उत्पन्नस्यापत्ति
रितितत्तत्संयोगव्यक्तीनांत्वयाहेतुत्वानभ्युपगमात्प्रागभावस्यतदानीमपिसत्वादितिशेषः तत्संयोगव्यक्तीनांहेतुत्वोपगमेचव्यर्थंप्रागभावकल्पनमितिभावः

का॰ मु॰
दि॰ टी॰
४४

णं।।हसनंतुकपटानधिकरणोप्यित्यर्थः।नंतंनरेपीति चरमसंयोगाधिकरणानंतुभिन्नसहस्रनंतुकपटाधिकरणानंनावपीत्यर्थः।दीधितिकृतामभिप्रेतन
विशेषणादिति नास्तीत्यादिप्रतीतेरत्यंताभावव्यावृत्तिरितिभावः कथंरक्तोनास्तीति नास्तीत्यादिप्रतीतेरत्यंताभावविषयत्वेमानाभावेननप्रागभावसिद्धिरितिभावः
माहएवमप्यस्तिति सप्रतियोगिकत्वइति तथाचतस्याभावत्वेमानाभावेननप्रागभावसिद्धिरितिभावः पूर्वपक्षिकथिताशंकायामिति महाघटकालस्यघटाभावसंबंधाघट
षयकत्वादित्याशंकितुरभिप्रायः सिद्धांतिनस्तुतथात्वेमानाभावइत्याशयइतिध्येयम् पूर्वपक्षिकथिताशंकायामिति ननुनादृशप्रतीतेर्नात्यंताभावोविष
कत्वेपिघटप्रागभावादिकालेघटात्यंताभावबुद्ध्यापत्तिरितिशंकायामित्यर्थः रक्तंरूपंनास्तीत्याकारकप्रत्ययइति ननुनादृशप्रतीतेर्नात्यंताभावोविष
यः किंतुप्रागभावध्वंसावेवतथेत्युक्तमेवेत्याशंकायामाह तस्येति नास्तीतिप्रत्ययस्येत्यर्थः सामान्याभावावगाहित्वात् सामान्यधर्मावच्छिन्नप्रतियोगि
ताकाभावविषयकत्वादित्यर्थः ध्वंसप्रागभावयोश्चसामान्यधर्मावच्छिन्नप्रतियोगिताकत्वानंगीकारादितिशेषः ननुनास्तीतिप्रत्ययस्यसामान्यधर्माव
च्छिन्नप्रतियोगिताकाभावमात्रविषयकत्वेमानाभावइत्याशंक्यनिराचष्टेनचेति पूर्वापरेति पूर्वंरक्तः ततःश्यामः ततोरक्तस्ततःश्यामस्ततोरक्तोयोघटः
तदपेक्षयात्यंताभावस्यानतिरिक्तत्वं वाच्यम् विनिगमनाविरहेणपदार्थांतरध्वंसप्रागभावयोरपितत्स्वीकारप्रसंगेनगौरवात् तदपेक्षयात्यंताभावस्यानतिरिक्तश्यामा
दि।।वाच्यम् विनिगमनाविरहेणपदार्थांतरध्वंसप्रागभावयोरपितत्स्वीकारप्रसंगेनगौरवात्
दौसंबंधकल्पनेनैवलाघवादित्यन्यत्रविस्तरः नन्वभावस्तुद्विधेत्यादिविभागोनुपपन्नः।भावएवमानाभावादित्यभिप्रायेणप्राभा
करःशंकतेनन्विति अभावस्याधिकरणात्मकत्वेगौरवंप्रदर्शयितुमनंतेत्युक्तम् अतिरिक्तेति भावानिरिक्तेत्यर्थः।। ६ ।।
तस्मिन्मध्यरक्ततादशायामित्यर्थः क्रमिकरक्तरूपस्थलेतुतेयमापत्तिःसंभवतितादृशरक्तध्वंसप्रागभावयोर्नास्तीत्याकारकप्रतीतिनियामक
त्वानंगीकारसंभवात् उक्तस्थलेतुश्यामतादशायांतादृशप्रतीत्यातयोरपितादृशप्रतीतिनियामकत्वस्यआवश्यकत्वादितिध्येयं अव्याप्यवृत्तित्वेने
ति कालिकाव्याप्यवृत्तित्वेनेत्यर्थः पदार्थांतरध्वंसेतिरक्तरूपध्वंसोत्पत्तिकालोत्पत्तितत्समानाधिकरणवायुसंयोगादिध्वंसेत्यर्थः गौरवादिति विनिगम
नाविरहेणानंतध्वंसादेरक्तत्वावच्छिन्नप्रतियोगिताकत्वकल्पनापत्त्यागौरवादित्यर्थः अभावस्यअधिकरणरूपतामूलेशंकितातत्रपूर्वग्रंथसंगति
माह नन्वभावइति अतिरिक्तत्वस्यक्लृप्तपदार्थातिरिक्तार्थकत्वंनसंभवतिअभावस्यापिनैयायिकैःक्लृप्तत्वात् अतस्तदर्थमाह भावातिरिक्तइतिअभा
वस्याधिकरणात्मकत्वइति गंधाभावस्यजलादिरूपत्वेजलत्वादिनैवतेषांनघ्राणेंद्रियग्राह्यतागंधाभावत्वेनतुतेषामपितथात्वमिष्टमेवेतिप्राभाकराणां

एम
४४

र॥ मूलेसाधर्म्यवैधर्म्यनिरूपणयोः प्रयोजनस्यानुक्तत्वात् तत्प्रदर्शयितुमाह परस्परेति ज्ञानविषयतात्वेनेतिवृत्तिमदभावाप्रतियोगित्वंनकेवलान्व
यित्वंकेवलान्वयिनोपिदित्वादिनाऽभावसत्वात् किंतुवृत्तिमदभावप्रतियोगितानवच्छेदकधर्मवत्वमेवतथाएवंचघटादिनिष्ठविषयताव्यक्तेरपिज्ञान
दि॥ अभावस्याधिकरणात्मकत्वेऽभेदेआधाराधेयभावानुपपत्तिरूपोदोषःसोप्यस्मिन्मतेनेत्याहएवंचेति अधिकरणापेक्षयातिरिक्तत्वे
चेत्यर्थः नन्वभावाधिकरणकाभावस्याधिकरणात्मकत्वेयथाधाराधेयभावोपपत्तिस्तथासर्वत्राप्यस्त्वित्यतोदूषणांतरमाहएवंचेति
अन्यथा अभावस्याधिकरणात्मकत्वे एतेनवक्ष्यमाणदूषणेन परस्परधर्मनायत्तानांसप्तपदार्थानामेवपरस्परभेदकत्वंज्ञाप
मु॥ नन्वस्त्वभावानामधिकरणात्मकत्वंलाघवादितिचेन्नअनंताधिकरणात्मकत्वकल्पनापेक्षयातिरिक्तकल्पनायाएवलघीयस्त्वा
त् एवंचाधाराधेयभावोप्युपपद्यते एवंचतत्तच्छब्दरसगंधाद्यभावानांप्रत्यक्षत्वमुपपद्यते अन्यथातत्तदधिकरणानांतत्तदि
न्द्रियाग्राह्यत्वात्प्रत्यक्षत्वंनस्यात् एतेनज्ञानविशेषाद्यात्मकत्वमभावस्येत्यपिप्रत्युक्तम् अप्रत्यक्षत्वापत्तेः इदानींपदा
र्थानांसाधर्म्यंवैधर्म्यंवक्तुंप्रक्रमते सप्तानामिति सप्तानामपिसाधर्म्यंज्ञेयत्वादिकमुच्यते। १३। समानोधर्मोयेषांतेसध
र्माणस्तेषांभावःसाधर्म्यंसमानोधर्मइतिफलितोर्थः एवंविरुद्धोधर्मोयेषांतेविधर्माणस्तेषांभावोवैधर्म्यंविरुद्धोध।
र्मइतिफलितोर्थःज्ञेयत्वंज्ञानविषयतासाचसर्वत्रैवास्तिईश्वरज्ञानविषयतायाः केवलान्वयित्वात्॥ ९ ॥
यितुमाह इदानीमिति पदार्थनिरूपणानंतरमित्यर्थः तदनिरूपणेतत्तत्पदार्थघटितस्यतत्तत्पदार्थस्यसाधर्म्यतयानिरूपणासं
भवादितिभावः समानोधर्मस्सधर्मस्तस्यभावः साधर्म्यमेवंवैधर्म्यमित्यत्रापि इतिभ्रमवारणायबहुव्रीहिमाह समानोधर्मो
येषामितिकेवलान्वयित्वादिति विषयभेदेनविषयताया भेदेपिज्ञानविषयतात्वेनकेवलान्वयित्वमस्त्येवेतिभावः॥ १ ६ ७ ॥
विषयतात्वमादायकेवलान्वयित्वमस्यतमेवेतिभावः कालसंबंधित्वमिति इदंचगगनादीनामपिकालवृत्तित्वमभ्युपेत्यअवृत्तिगगनादीनांका
लावृत्तित्वेअस्तित्वस्यकेवलान्वयित्वानुपपत्तिःयुक्तंचेतत् कथमन्यथागगनादीनांनियतपूर्ववृत्तित्वघटितशब्दादिकारणत्वमितिमंतव्यम्॥१२।

का॰ मु॰ दि॰ रा॰ ४४

चेत्यर्थः दीधितिकृतामभिप्रेतन्तंतुकपटाधिकरणत्वं तावपीत्यर्थः दीधितिकृतामभिप्रेत
रा॥ हस्तसंतंतुकपटानधिकरणोऽस्त्वित्यर्थः तंतंतरेपीति चरमसंयोगाधिकरणतंतुभिन्नसहस्रतंतुकपटाधिकरणतंतावपीत्यर्थः कथंरक्तो नास्तीति नास्तीत्यादिप्रतीतेरत्यंताभाववि
माह एवमप्यस्तिति सप्रतियोगिकत्वइति तथाचतस्याभावत्वे मानाभावेनतप्रागभावसिद्धिरिति भावः कथंरक्तोनास्तीति नास्तीत्यादिप्रतीतेरत्यंताभाववि
षयकत्वादित्याशंकितुरभिप्रायः सिद्धांतितस्तु तथात्वे मानाभावइत्याशयइतिध्येयम् पूर्वपक्षिकथिताशंकायामिति महाघटकालस्यघटाभावसंबंधाघट
कत्वेपिघटप्रागभावादिकालेघटात्यंताभावबुद्ध्यापत्तिरितिशंकायामित्यर्थः रक्तंरूपंनास्तीत्यकारकप्रत्ययइति ननु तादृशप्रतीतेर्नात्यंताभावोविष
यः किंतुप्रागभावध्वंसावेवतथेत्युक्तमेवेत्याशंकायामाह तस्येति नास्तीतिप्रत्ययस्येत्यर्थः सामान्याभावावगाहित्वात् सामान्यधर्मावच्छिन्नप्रतियोगि
ताकाभावविषयकत्वादित्यर्थः ध्वंसप्रागभावयोश्च सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वानंगीकारादितिशेषः ननुनास्तीतिप्रत्ययस्यसामान्यधर्माव
च्छिन्नप्रतियोगिताकाभावमात्रविषयकत्वे मानाभावइत्याशंक्यनिराचष्टेनचेति पूर्वापरेति पूर्वंरक्तः ततः श्यामः ततोरक्तस्ततः श्यामस्ततो रक्तोयोघटः
दि॥ वाच्यम् विनिगमनाविरहेणपदार्थांतरध्वंसप्रागभावयोरपितत्स्वीकारप्रसंगेनगौरवात् तदपेक्षयात्यंताभावस्यानरा श्यामा
दौसंबंधकल्पनेनैवलाघवादित्यन्यत्रविस्तरः नन्वभावस्तुद्विधेत्यादिविभागोनुपपन्नोऽभावएवमानाभावादित्यभिप्रायेणप्राभा
करः शंकतेनन्विति अभावस्याधिकरणात्मकत्वे गौरवंप्रदर्शयितुमनंतेत्युक्तम् अतिरिक्तेति भावातिरिक्तेत्यर्थः॥ ६ ॥
तस्मिन् मध्यरक्ततादशायामित्यर्थः क्रमिकरक्तरूपस्यस्थलेतुनेयमापत्तिः संभवतितादृशरक्तध्वंसप्रागभावयोर्नास्तीत्याकारकप्रतीतिनियामक
त्वानंगीकारसंभवात् उक्तस्थलेतुश्यामतादशायांतादृशप्रतीत्यातयोरपितादृशप्रतीतिनियामकत्वस्यआवश्यकत्वादितिध्येयं अव्याप्यवृत्तित्वेने
ति कालिकाव्याप्यवृत्तित्वेनेत्यर्थः पदार्थांतरध्वंसेतिरक्तरूपध्वंसोत्पत्तिकालोत्पत्तिकतत्समानाधिकरणवायुसंयोगादिध्वंसेत्यर्थः गौरवादितिविनिगम
नाविरहेणानंतध्वंसादेरक्तत्वावच्छिन्नप्रतियोगिताकत्वकल्पनापत्त्यागौरवादित्यर्थः अभावस्यअधिकरणरूपतामूलेशंकितातत्रपूर्वग्रंथसंगति
माह नन्वभावइति अतिरिक्तत्वस्यक्लृप्तपदार्थातिरिक्तार्थकत्वंनसंभवति अभावस्यापिनैयायिकैःक्लृप्तत्वात् अतस्तदर्थमाह भावातिरिक्तइति अभा
वस्याधिकरणात्मकत्वइति गंधाभावस्यजलादिरूपत्वेजलत्वादिनैवतेषांतघ्राणेंद्रियग्राह्यतागंधाभावत्वेनतुतेषामपितथात्वमिष्टमेवेतिप्राभाकराणां

राम ४५

रा॥ मूलेसाधर्म्यवैधर्म्यनिरूपणयोः प्रयोजनस्यानुक्तत्वात् तत्प्रदर्शयितुमाह परस्परेति ज्ञानविषयतात्वेनेतिवृत्तिमदभावाप्रतियोगित्वंनकेवलान्व
यित्वंकेवलान्वयिनांपिहित्वादिनात्यभावसत्वात् किंतुवृत्तिमदभावप्रतियोगितानवच्छेदकधर्मवत्वमेवतथाएवंचघटादिनिष्ठविषयतान्यक्तेरपिज्ञान
दि॥ अभावस्याधिकरणात्मकत्वेऽभेदेआधाराधेयभावानुपपत्तिरूपोदोषःसोप्यस्मिन्मतेनेत्याहएवंचेति अधिकरणापेक्षयातिरिक्तत्वे
चेत्यर्थः नन्वभावाधिकरणकाभावस्याधिकरणात्मकत्वेयथाधाराधेयभावोपपत्तिस्तथासर्वत्राप्यस्त्वित्यतोदूषणांतरमाहएवंचेति
अन्यथा अभावस्याधिकरणात्मकत्वे एतेनवक्ष्यमाणदूषणेन परस्परधर्मतापन्नानांसप्तपदार्थानामेवपरस्परभेदकत्वंज्ञाप
मु॥ नन्वस्त्वभावानामधिकरणात्मकत्वंलाघवादितिचेन्न अनंताधिकरणात्मकत्वकल्पनापेक्षयातिरिक्तकल्पनायाएवलघीयस्त्वा
त् एवंचाधाराधेयभावोप्युपपद्यते एवंचतत्तद्रूपरसगंधाद्यभावानांप्रत्यक्षत्वमुपपद्यते अन्यथातत्तदधिकरणानांतत्तदि
न्द्रियाग्राह्यत्वात्प्रत्यक्षत्वंनस्यात् एतेनज्ञानविशेषाद्यात्मकत्वमभावस्येत्यपिप्रत्युक्तम् अप्रत्यक्षत्वापत्तेः इदानींपदा
र्थानांसाधर्म्यवैधर्म्येवक्तुंप्रक्रमतेसप्तानामिति सप्तानामपिसाधर्म्यंज्ञेयत्वादिकमुच्यते।१३। समानोधर्मोयेषांतेसध
र्माणस्तेषांभावःसाधर्म्यंसमानोधर्मइतिफलितोर्थः एवंविरुद्धोधर्मोयेषांतेविधर्माणस्तेषांभावोवैधर्म्यंविरुद्धोध।
र्मइतिफलितोर्थःज्ञेयत्वंज्ञानविषयतासाचसर्वत्रैवास्तिईश्वरज्ञानविषयतायाः केवलान्वयित्वात्॥ १ ॥

यितुमाह इदानीमिति पदार्थनिरूपणानंतरमित्यर्थः तदनिरूपणेतत्तत्पदार्थघटितस्यतत्तत्पदार्थस्यसाधर्म्यतयानिरूपणासं
भवादितिभावः समानोधर्मस्सधर्मस्तस्यभावः साधर्म्यमेवंवैधर्म्यमित्यत्रापि इतिभ्रमवारणायबहुव्रीहिमाह समानोधर्मो
येषामितिकेवलान्वयित्वादितिविषयभेदेनविषयताभेदेपिज्ञानविषयतात्वेनकेवलान्वयित्वमस्त्येवेतिभावः॥ २ ६ ७॥
विषयतात्वमादायकेवलान्वयित्वमक्षतमेवेतिभावः कालसंबंधित्वमिति इदंचगगनादीनामपिकालवृत्तित्वमस्तुपेत्यत्रवृत्तिगगनादीनांका
लावृत्तित्वेप्यसितस्यकेवलान्वयित्वानुपपत्तिःयुक्तंचैतत् कथमन्यथागगनादीनांनियतपूर्ववृत्तितघटितशब्दादिकारणत्वमितिमंतव्यम्॥१२।

त्र॥ षड्भावपदार्थानांमूलेसाधर्म्यानुक्त्यातत्र्यूनतां परिजिहीर्षुराह द्रव्यादीनामिति ननुद्रव्यादयःपंचभावाइति कारिकाया अनेकत्वमात्रंसाधर्म्यमु॰
क्तंतत्कथमनेकत्वेसतिभावत्वंमुक्तावल्यांसाधर्म्यमुक्तं मूलेनतत्तदुल्लाभादित्याशंकांपरिहरति एवंचेति उक्तार्थभाष्यकृतांसंमतिमाह अतएवेति
पंचभावानामितीति तथाचभावत्वस्यापिउद्देश्यतावच्छेदककोटिप्रवेशस्यभाष्यकृदनुमतत्वेपंचानामित्यपहायपंचभावानामनेकत्वमित्येव
ब्रूयादितिभावः॥ नन्वनेकभाववृत्तीत्यत्रअनेकत्वयदिवहुत्वसंख्यातदागुणादौसंख्याविरहात्तेष्वव्याप्तिः यदिचयत्किंचिदेवभिन्नत्वंतदासमवाये॰

दि॥एवमग्रेपिज्ञेयत्वादीत्यत्रादिपदार्थंदर्शयति एवमभिधेयत्वेति अभिधेयत्वमभिधाविषयत्वमभिधाचसंकेतग्राह्योधिकःपदा
र्थ इतिमीमांसकाःसंकेतभिन्नायामभिधायांमानाभावात्संकेतएवाभिधेतिनैयायिकाः प्रमेयत्वादिकमित्यादिनाऽस्तित्वपरिग्रहः
तच्चकालसंबंधित्वं॥१२॥१३॥द्रव्यादीनांपंचानांसाधर्म्यंभावत्वंस्पष्टमतस्तदुपेक्ष्यद्रव्यादीनांपंचानांसाधर्म्यमूलेप्रपंचितम् द्र

मु॰॥एवमभिधेयत्वप्रमेयत्वादिकंबोध्यम्॥१२॥१३॥ द्रव्यादयःपञ्चभावाअनेकेसमवायिनः द्रव्यगुणकर्मसामान्यवि॰
शेषाणांसाधर्म्यंभावत्वमनेकत्वंसमवायित्वञ्च यद्यप्यनेकत्वमभावेप्यस्ति तथाप्यनेकत्वेसतिभावत्वंपञ्चानांसाध
र्म्यम्॥

व्यादयइत्यादिना अनेकत्वेसतिभावत्वमिति एवञ्चमूलेद्रव्यादयःपञ्चेत्युद्देश्यपदम् भावाअनेकइतिविधे
यपदमितिबोध्यम् अतएवभाष्येपञ्चानामित्युक्तन्तुपञ्चभावानामिति अनेकभाववृत्तीत्यादि अत्रचानेकभाववृत्तित्वंस्वप्र
तियोगिवृत्तित्वस्वसामानाधिकरण्योभयसम्बन्धेनभेदविशिष्टत्वेसतिभाववृत्तित्वम्॥ तिव्याप्तिः यदितुएकत्वावच्छिन्ना॰
सामान्यभेदः तत्रचैकत्वंयदिसंख्यारूपंतदोक्तातिव्याप्तितादवस्थ्यम् यदितन्मात्रविषयकबुद्धिविषयत्वंतदाप्रसिद्धिः स्वमात्रविषयक
बुद्धिविषयत्वरूपैकत्वस्यकेवलान्वयितयातदवच्छिन्नसामान्यभेदाप्रसिद्धिरित्याशंकानिरासायअनेकभाववृत्तित्वंनिर्वक्ति अत्रचेति अ
भावत्ववारणायभाववृत्तित्वनिवेशः समवायत्ववारणायस्वान्यंतनिवेशः सत्यंतेउभयसंबंधनिवेशोपितद्वारणायैवेतिबोध्यम्॥ उपाधिमता
यांसंबंधविवक्षायाःफलमाह तेनेति अतस्तत्रोक्तमिति स्वरूपेणोपाधिमत्वोक्तौद्रव्यत्वादीनांदैशिकस्वरूपसंबंधेमानाभावेनद्रव्यादिष्वव्या

रा॰॥ पदार्थचतुष्टयस्य साधर्म्यानुक्त्या मूलस्य न्यूनतां परिहरन्नाह अत्र चेति सत्तावन्तस्त्रयस्त्वाद्या इत्यत्र आद्यत्रयमुद्दिश्य सत्तावत्त्वं साधर्म्यं विधी
यते तच्चायुक्तं उद्देश्यतावच्छेदकपदस्य पूर्वमभिधेयत्वात् अत एव पर्वतो वह्निमानित्येव प्रतिज्ञावाक्यं न तु वह्निमान् पर्वत इत्याशंकानिरासाय योज
नया लभ्यमर्थं मुक्तावल्यां प्रकटयतीत्याह उद्देश्यवाचकेति अन्यथा तादृशवाक्यस्यापि स्पष्टार्थतया द्रव्यगुणेत्यादिवाक्यमनर्थकमेव स्यादिति भावः

दि॰॥ तेन गुणादौ संख्यारूपस्यानेकत्वस्याभावेपि नाव्याप्तिः भावत्वरूपतादृशधर्ममादाय समवाये निव्याप्तिवारणाय पदार्थविभाज
कोपाधीति उपाधिमत्ता च समवायस्वरूपान्यतरसम्बन्धेन तेन कालिकसम्बन्धेन ध्वंसस्य तादृशोपाधिमत्त्वेपि न क्षतिः समवायेनो
पाधिमत्त्वविवक्षणे तु सामान्यादावव्याप्तिः स्यादत उक्तम् अन्यतरत्वघटकस्वरूपन्तु कालिकसम्बन्धभिन्नं ग्राह्यम् तेन
ध्वंसेनातिव्याप्तिः अत्र च समवेतसमवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वम् द्रव्यादिचतुर्णां साधर्म्यं बोध्यम् उद्देश्यवाचक।

मु॰॥ तथा चानेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वमिति फलितोर्थः तेन प्रत्येकं घटादावाकाशादौ च नाव्याप्तिः स
मवायित्वं त्व समवायसम्बन्धेन सम्बन्धित्वं तत्तु समवायवत्त्वं सामान्यादावभावात् सत्तावन्तस्त्रयस्त्वाद्याः द्रव्यगुणकर्मणां
सत्तावत्त्वमित्यर्थः गुणादिर्निर्गुणक्रियः यद्यपि गुणक्रियाशून्यत्वमाद्यक्षणे घटादावतिव्याप्तं क्रियाशून्यत्वं त्व गगनादाव

पदस्य चरमसुपादानमयुक्तम् अतो योजनया तदर्थमप्रदर्शयति द्रव्यगुणकर्मणामिति निर्गुणक्रियद्रव्येऽतिव्याप्तम्॰॥
नि मूलं तदर्थश्च गुणक्रियान्यतराभाववत्त्वम् तेन गुणक्रिययोरन्योन्याभावमादाय द्रव्ये नातिव्याप्तिः यद्यपि गुणेति॰ न च गुणागु।
णिनोर्वामदक्षिणगोविषाणवत्समानकालिकत्वात्कथं गुणशून्यत्वमिति वाच्यम् निर्गुणे गुणोत्पत्तिस्वीकारेण तत्सम्भवात् न चैवं
घटादेराद्यक्षणावच्छिन्नस्य चाक्षुषत्वं न स्यादिति वाच्यम्॥ अत्र च नित्यानित्यसमवृत्तिपदार्थविभाजकोपाधिमत्त्वं द्रव्यगुणयोः साधर्म्यं बो
ध्यं द्रव्यमात्रस्य तु साधर्म्यं मूलकृतैव वक्ष्यते ननु निर्गुणत्वादिकं यदि गुणक्रियाभाववत्त्वं तदा द्रव्येऽतिव्याप्तिः तत्रापि तयोर्भेदसत्त्वादित्यत आह तदर्थ
श्चेति चाक्षुषत्वं न स्यादिति चाक्षुषं प्रति रूपस्य कारणत्वादुत्पत्तिक्षणे च घटादौ तदभावादिति भावः॥ ७ ७ ७ ७ ७॥ ❋ ॥

का॰मु॰ रा॰॥ नन्वाद्यक्षणे घटादौ रूपांगीकारेपितत्पूर्वक्षणे घटाद्यभावेन कारणीभूतस्य तद्वृत्तिचक्षुःसंयोगस्याभावादाद्यक्षणे घटादि चाक्षुषमेव न संभवतीति क
दि॰रा॰ थं नियमापत्तिरिति चक्षुःसंयुक्तसमवायस्यापि घटादौ तदानीमसंभवात् उत्पत्तिप्राक्क्षणे घटादेरेवाभावात् वस्तुतस्तु परमाणौ द्रव्यत्वादिप्रत्यक्षवा
४६ रणाय चक्षुःसंयुक्ते योग्यत्वविशेषणस्यावश्यकतया द्व्यणुकचाक्षुषे व्यभिचारापत्त्या द्रव्यान्यद्रव्यसमवेतचाक्षुषत्वस्यैव संयुक्तसमवायकार्यतावच्छेद
कत्वेनोपगन्तव्यतया चक्षुःसंयुक्तसमवायेन घटादेः प्रत्यक्षमेव न संभवतीत्यभिप्रायेण समाधत्ते इष्टापत्तेरिति तथा च तृतीयक्षणएव घटादिचाक्षुषमिति

दि॰॥ इष्टापत्तेः तथापीति गुणवत्ता च समवायेन तेन कालिकसम्बन्धेगुणावच्छिन्नवृत्तेर्गुणत्वादेरसङ्ग्रहेपि नक्षतिः गुणवद्वृत्ति
त्वं तादृशधर्मवत्त्वं समवायस्वरूपान्यतरसम्बन्धेन तेन समवायेन गुणवद्वृत्तित्वाभिधाने तादृशस्य द्रव्यत्वप्रकारकप्रमा
विशेष्यत्वस्य द्रव्ये सत्वादतिव्याप्तिः अतस्तैनैव तद्वत्त्वम्वाच्यम् तदा सामान्यादावव्याप्तिरिति परास्तम् पदार्थविभाजकपदस्यकृ

मु॰॥ तथापि गुणवद्वृत्तिधर्मवत्त्वं कर्मवद्वृत्ति पदार्थविभाजकोपाधिमत्वं च तदर्थः न हि घटत्वादिकं द्रव्यत्वा
दिकं वा गुणवद्वृत्ति कर्मवद्वृत्ति वा किन्तु गुणत्वादिक तथा आकाशत्वादिकन्तु न पदार्थविभाजकोपाधिः १४।
सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः सामान्यानधिकरणत्वं सामान्यादीनामित्यर्थः॥ ७ ९ २ ॥

त्यमाह आकाशत्वादिकन्त्विति कर्मवद्वृत्त्याकाशत्वरूपोपाधिमत्याकाशेऽतिव्याप्तिवारणाय तत्पदमिति भावः॥ १४॥ जा
त्यादीनामप्येकार्थसमवायसम्बन्धेन सामान्यवत्वात्सामान्यपरिहीनाइतिमूलमयुक्तमतो व्याचष्टे सामान्यानधिकरण राम॰
त्वमिति तथा च सामान्यनिरूपिताधिकरणतानसामान्यादौ एकार्थसमवायस्याधिकरणतानियामकत्वाभावादिति भावः। ४६

भावः॥१४॥ अधिकरणतानियामकत्वाभावादिति यद्यप्येवं सत्ति सामान्यादौ भावत्ववत्त्वमपि न स्यात् सामानाधिकरण्यसंबंधेन सत्ताधिकर ॥ दि॰
णत्वमादायैव तत्र भावत्वाधिकरणताया उपपादनीयत्वात तथापि सत्तासमवाय सामानाधिकरण्यान्यतरस्यैव भावत्वरूपत्वादिति भावः वस्तुतस्तु स दि॰
मवायसंबंधावच्छिन्नप्रतियोगिताकसामान्याभावस्य साधर्म्यत्वेन कोपि दोष इति ध्येयम् तच्च न संभवतीत्यत्र चकारो न समुच्चयार्थकः परमाणुपरिमाणस्य

रा॰॥तयाकालिकविधयातींद्रियतयाप्रत्यक्षे विषयविधयाचकारणत्वासंभवेनकार्यांतरं प्रतिकारणत्वांतरस्यसमुच्चयासंभवादनस्तस्यतुकारा॰
यंकत्वमाहत्वर्थइति ननुद्व्यणुकपरिमाणमपिपरमाणुत्वेनअणुपरमाणुसजातीयं अणुपरिमाणादुत्कृष्टंचेतिद्व्यणुकपरिमाणस्यापिकारणत्वेन

दि॰॥अप्रसिद्धत्वात्पारिमाण्डल्यपदार्थंनिर्वक्ति पारिमाण्डल्यमिति तद्भिन्नानामितिपारिमाण्डल्यभिन्नानाम् ननुद्व्यणुकपरिमाण
स्यकारणत्वाभावात्तत्रातिव्याप्तिरतः पारिमाण्डल्यपदम् द्व्यणुकपरिमाणस्याप्युपलक्षणम् तेनतस्याप्यलक्ष्यत्वमित्यभिप्रेत्या॰
ह अणुपरिमाणन्त्विति परमाणुद्व्यणुकसाधारणमणुपरिमाणंत्वित्यर्थः पारिमाण्डल्यस्यकारणत्वेवाधकमाह नहीति॰
अणुपरिमाणंहीत्यर्थ॰ तच्चेति चस्त्वर्थे तत्रहेतुमाह परिमाणस्येति स्वसमानजातीयेति॰ साजात्यमत्रपरिमाणविभाजक

मु॰॥ पारिमाण्डल्यभिन्नानांकारणत्वमुदाहृतम्॥१५॥ पारिमाण्डल्यमणुपरिमाणंकारणत्वं तद्भिन्नानामित्यर्थः
अणुपरिमाणन्तुनकस्यापिकारणम् नहिस्वाश्रयारब्धद्रव्यपरिमाणारम्भकम्भवेत्तच्चनसम्भवति परिमाणस्यस्वसमा
नजातीयोत्कृष्टपरिमाणजनकत्वनियमात् महदारब्धस्यमहत्तरत्ववदणुजन्यस्याणुतरत्वप्रसङ्गात् एवंपर
ममहत्परिमाणमतीन्द्रियसामान्यंविशेषाश्चवोध्याः॥ ९ ॥ ❁ ॥ ६ ॥ ९ ॥

रूपेणवोध्यम् अणुजन्यस्येति उत्कृष्टत्वाणोरणुतरमेवेतिभावः नचाणुजन्यस्याणुतरत्वमस्तुकिम्वाधकमिति वाच्य
म् तथासतित्रुटेरचाक्षुषत्वप्रसङ्गात् ननुतर्हिद्व्यणुकादिपरिमाणस्यकिञ्जनकमितिचेत्संख्यैवेत्यवेहिव्यक्तीभवि
ष्यतिचेदमुपरिष्टात्मूलस्यन्यूनतांपरिहरति एवमितिवोध्याइत्यनेनान्वयः नकारणानीतिवोध्याइत्यर्थः ऐन्द्रि
यिकयोर्महत्वसामान्ययोःस्वविषयकलौकिकप्रत्यक्षेहेतुत्वात्परमत्वातीन्द्रियत्वेइहविशेषणे॥

उक्तनियमस्तनिरित्याशंक्याह साजात्यमत्रेति परिमाणविभाजकोपाधयः अणुत्वत्वमहत्त्वत्वादयः अचाक्षुषत्वप्रसंगादिति महत्वाभावादि॰
तिभावः इदमिति द्व्यणुकादिपरिमाणेसंख्यादिकारणत्वमित्यर्थः उपरिष्टात् गुणनिरूपणेइत्यर्थः इहेति महत्वसामान्ययोरित्यर्थः॥ ❦ ॥

का॰मु॰ रा॥ ननुयोगिप्रत्यक्षेविषयस्यकारणत्वाभावेकायुक्तिरित्यतआह यथेति तथाचयोगिप्रत्यक्षेपिविषयस्यकारणत्वेतेषामतीतानागतविषयकप्रत्यक्षंनस्यादि
दि॰रा॰ तिलौकिकप्रत्यक्षस्यएवविषयस्यकारणत्वमंगीकार्यंयोगजधर्मस्त्वलौकिकसन्निकर्षएवेतिभावः स्वप्रत्यक्षइति आत्मगतमहत्वप्रत्यक्षेस्वस्यविषयविधया
४७ दि॰॥ ननुयोगिप्रत्यक्षेपारिमाण्डल्यस्यापिविषयविधयाकारणत्वात्पारिमाण्डल्यभिन्नानामित्ययुक्तमतआह इदमपीति यथाजोगजधर्मे॰
पातीतानागतविषयकंप्रत्यक्षंतथाविद्यमानविषयकमपीत्यर्थः ननुज्ञायमानसामान्यस्यप्रत्यासत्तित्वेनज्ञायमानहेतोश्चानुमितिकर
णत्वेनपारिमाण्डल्यस्यसामान्यलक्षणाजन्यज्ञानेऽनुमितौचकारणत्वात्पारिमाण्डल्यभिन्नानामितिमूलमसङ्गतमतआह ज्ञायमाने
ति आत्ममानसेति॰ विषयतयाद्रव्यलौकिकप्रत्यक्षेसमवायेनमहत्वस्यहेतुत्वादितिभावः यद्यपिस्वप्रत्यक्षइत्येववक्तुमुचितम् तथा
पिटीकाकृन्मते आत्मैकत्वमहत्वयोरयोग्यत्वात्प्रत्यक्षत्वसम्भवति इत्यात्ममानसेत्युक्तम् केचित्तुकारणत्वञ्चान्यत्रपारिमाण्डल्यादिभ्य
मु॰॥ इदमपियोगिप्रत्यक्षेविषयस्यनकारणत्वम् ज्ञायमानसामान्यंनप्रत्यासत्तिः ज्ञायमानंलिङ्गन्त्वानुमितिकरणमित्यभि
प्रायेणोक्तम् आत्ममानसप्रत्यक्षेआत्मपरममहत्वस्यकारणत्वात्परममहत्परिमाणमाकाशादेर्बोध्यम् तस्यापिनकारणत्वमित्या
चार्याणामाशयइत्यन्येनच ज्ञानातिरिक्तंप्रत्येवाकारणतायाआचार्यैरुक्तत्वात्॥ १५॥ ९ इत्यत्रभाष्येआदिग्रहणात्परमम॰
हत्वंगृह्यते इतिवदतामाचार्याणामात्मपरिमाणमपिनकस्यचित्कारणमित्याशयोलभ्यते नचतत्रपरममहत्पदमात्मपरिमाणाति
रिक्तपरममहत्परिमाणपरमिति वाच्यम् मानाभावादिति वदन्ति तन्मतन्दूषयितुमुपन्यस्यति तस्यापीति आत्ममहत्परिमाणस्यापीत्यर्थः
आचार्य्याणाम् उदयनाचार्य्याणाम् ज्ञानातिरिक्तम्प्रत्येवेति कारणत्वञ्चज्ञानधर्मेतरभावकार्यापेक्षयाइत्याचार्यग्रन्थः ज्ञानधर्माज्ञानादयः
तदतिरिक्तभावकार्यम्प्रतिकारणत्वंपारिमाण्डल्यभिन्नानांसाधर्म्यमितितदर्थः॥ ९ कारणत्वादितिभावः अयोग्यत्वेनेति अन्यथात्मन
अणुत्वेइंद्रियादिस्वरूपत्वेचविवादासंभवादितिभावः तदतिरिक्तभावकार्यमिति ज्ञानाद्यतिरिक्तभावकार्यमित्यर्थः॥ ॰॥ यद्यपिज्ञानधर्मेतरकार्या राम॰ ४७
पेक्षमित्याचार्यग्रंथेभावत्वंनोपात्तंतथापिद्व्यणुकपरिमाणस्यस्वध्वंसंप्रतिकारणत्वेनपारिमाण्ड॥

